॥ श्रीजिनाय नमः ॥

# श्रीमद्धरिभद्रसूरिसूत्रितस्य श्रीपञ्चवस्तुग्रन्थस्य स्वोपज्ञवृत्तिकस्य उपोद्घातः ।

शेमुषीधनाः ! स्वीक्रियतामिदं ग्रन्थरत्नमुपदीक्रियमाणं मुद्रयित्वा, ग्रन्थरत्नता चास्य विधातुः विषयस्य प्रामाण्यतायाश्चानन्यतुल्यत्वात्, के विधातार इति चेत् परःसहस्रग्रन्थोद्धारसौधसूत्रणसूत्रधारायमाणाः श्रीमन्तो हरिभद्रसूरयः, तत्रभवतां सत्ताकालादिविषयो निर्णयश्च योगदृष्टिसमुच्चयोपमितिभवप्रपञ्चकथापञ्चाशकप्रस्तावनादावस्माभिरुल्लिखितः श्रीधर्मसंग्रहण्यादिषु च तत्तत्प्रस्तावकैरुल्लिखितः, न विवादो विदुषां श्रीमतां सत्तासमयस्य वैक्रमीयषष्ठशताब्द्यां भावित्वे, विचारसारादिग्रन्थकारा अपि एतदेवाख्यान्ति, ततः सुस्थमेतत्–श्रीमन्तः वैक्रमीयषष्ठशताब्दीकाले सत्तावन्तः, तथा च श्रीमतां पूर्वधरानेहोनिकटकालभावित्वं न दुर्नेयं, अत एव च श्रीमद्भिरत्रापि प्रकरणे अनुयोगानुज्ञाधिकारे दृष्टिवादोद्धृतस्य धर्मविषयककषादिभेदस्य स्तवपरिज्ञायाश्च तथाविधाया व्याख्याकरणमन्वज्ञायि, यतस्त आहुः एकोनविंशतिविंशत्यधिकसहस्रतमगाथयोः तद्वृत्तौ च—

"दिट्ठिवायाई । तत्तो वा निज्जूढं" ततो वा–दृष्टिवादादेः निर्व्यूढं–आकृष्टं, ॥ निर्व्यूढलक्षणमाह–"सम्मं धम्मविसेसो जहिअं कसछेअतावपरिसुद्धो । वण्णिज्जइ निज्जूढं"–सम्यग् निर्व्यूढमेवंविधं भवति ग्रन्थरूपं, तच्च उत्तमश्रुतादि

एवमुपक्रम्योत्तमश्रुतं व्याख्यातं, तथा च तस्य दृष्टिवादोद्धृतत्वमव्याहतं, तस्य तथात्वावबोधश्च श्रीमतां पूर्वधरासन्नकालभावादेव, किंच-स्तवपरिज्ञा या समग्रा धृता सूरिभिः सा न स्वयंकृता, किंतु प्राभृतरूपा, यत आहुः दशाधिकैकादशशततमगाथावृत्तौ "स्तवपरिज्ञादयः प्राभृतविशेषा गृह्यन्ते" तथाच स्तवपरिज्ञायाः प्राभृतत्वं न विवादास्पदं, प्राभृतानि च पूर्वांशरूपाणीति तु 'पाहुडपाहुडपाहुडे'त्यादिज्ञातॄणां सुप्रतीतमिति श्रीमतां सूरीणां पूर्वधरकालासन्नता निर्विवादा, एवं च श्रीमतां प्रकरणरत्नरत्नाकरः सूत्रानुपात्येवेति न सूत्रश्रद्धालूनां शङ्कावकाशः कोऽपि प्रामाण्ये तदीयप्रकरणानां, यथा च श्रीमद्भिः पञ्चाशकादीनि प्रकरणानि समयपाथोधिनवनीतरूपाणि विहितानि तथैतदपि पञ्चवस्तुकाभिधानं प्रकरणं प्राणायि, यद्यपि बहूनि उपलभ्यन्ते श्रीमद्भिः सूत्रितानि प्रकरणानि आप्तशास्त्रविवरणानि च तथापि क्रमस्तेषां न ज्ञायते, तदज्ञानाच्च श्रीमद्भिः कस्य प्रकरणरत्नस्यादौ कस्य च प्रकरणरत्नस्य पश्चाद्विहिताऽस्य ग्रन्थरत्नस्य संकलनेति न निश्चीयते, तथापि ग्रन्थरत्नमिदं भवविरहाङ्कैरेव श्रीहरिभद्रसूरिभिः संदृब्धमिति तु 'आयाणुसरणत्थं भवविरहं इच्छमाणेणं'ति (१७१३) गाथावयवधृतभवविरहाङ्कतः स्पष्टमेव प्रतीयते, भवविरहाङ्कता च श्रीमतां श्रीमत्या अष्टकवृत्तेः पञ्चाशकवृत्त्यादेश्च स्पष्टैव, टीका तु प्रस्तुता 'कृतिर्धर्मतो याकिनीमहत्तरासूनोराचार्यहरिभद्रस्ये'ति प्रान्त्यस्पष्टलेखेन श्रीमद्भिरेव विहितेति प्रस्तुतग्रन्थरत्नस्य स्वोपज्ञवृत्तियुक्ततेति सुखेन निश्चीयते,

एवं ग्रन्थकर्तृषु आप्तेषु निश्चितेषु विषयो विचार्यते, यतो यथा ग्रन्थविधातॄणां माहात्म्येन ग्रन्थगौरवं तथैव ग्रन्थस्थविषयस्य महत्त्वेन ग्रन्थमाहात्म्यं, आद्यं श्रद्धानुसारिणां स्वभावसिद्धं, परमपरं तु तेषां तर्कानुसारिणां चेति ग्रन्थोल्लिखितो विषयो विचारणीयः, श्रीजैनशासनश्रद्धालूनां न नूत्नमेतत् निश्चेयं यदुत जैनशासनं समग्रं सच्चारित्रद्वारैव मुक्तिप्राप्तिख्यापकं, यद्यपि देशविरतिरूपं चारित्रं मोक्षसुखप्राप्तिहेतुस्तथापि तस्य तथात्वं सर्वविरतिचारित्रावाप्तिद्वारा, न तु जातुचिदपि स्वतन्त्रतया, किंच—देशविरतेरपि सद्भावस्तेषामेव ये सर्वविरतिमभिला-

सर्वविरत्यभिलाषाभावे तु तस्यास्तथात्वाभावः, स्पष्टं चेदं 'यतिधर्मानुरक्तानां, देशतः स्यादगारिणा'मिति श्रीहेमचन्द्राचार्यवचसा,
युक्ताः, सर्वविरत्यभिलाषाभावे तु तस्यास्तथात्वाभावः, यतः सम्यक्त्वचिह्नेषु संवेगो निर्वेदश्च मुख्यतया जेगीयेते
आस्तां देशविरतेरवाप्तिः, परं सर्वविरतिमनभिलाषुकाणां सम्यक्त्वस्याप्यभावः, यतः सम्यक्त्वचिह्नेषु संवेगो निर्वेदश्च मुख्यतया जेगीयेते
पारङ्गतागमतत्त्वज्ञैः, न च तौ सर्वविरत्यभिलाषमन्तरेण तथेति सुस्थता सर्वविरत्यभिलाषस्य यावज्जैनं व्याप्यतायां, प्रस्तुतं च प्रकरणं सर्वविर-
तानेवोद्दिश्य प्रवृत्तमिति मुमुक्षूणामनन्यमनस्कतयोपादेयोऽस्य विषयः, नाम चास्य सान्वर्थमेव, यतः पञ्चैव प्रतिपादितान्यत्र वस्तूनि, आदौ
तावत् प्रव्रज्याया विधानं पश्चात् प्रतिदिनक्रिया तृतीये स्थाने व्रतोत्थापना तुरीये च वस्तुनि आचार्यत्वगणयोरनुज्ञा अन्त्ये च अभ्युद्यत-
विहारोऽभ्युद्यतमरणं चाख्यायि, क्रमस्यैतस्य वास्तवता पूज्यैरेव प्रतिवस्तुप्रारंभं स्वयं प्रादर्शीति न तत्रायासः, प्रव्रज्याविधाननामके आद्ये
वस्तुनि भगवता प्रव्रज्यायाः योग्यतां प्रतिपादयता प्रव्रज्यायाः स्वरूपं तद्दानार्हादयश्च पदार्थाः स्फुटतरं प्रतिपादिताः, अत्र श्रीमद्भिर्वादिमु-
खानि मुद्रयितुं सपूर्वपक्षं दीक्षाकालः अष्टवर्ष्याः आसप्तति वर्षाणि प्रतिपादितः, न च वाच्यं अष्टवर्षप्रमाणस्य कथं दीक्षार्हतेति,
यतः राजकीये शासने तु वर्षसप्तकादूर्ध्वं बुद्धिमत्त्वेऽपराधकारिता तच्छिक्षा च प्रतिपादिता, दृश्यतामेतदीयो नियमः, एवं च सिद्ध-
मेतद् यदुत वर्षाष्टकादूर्ध्वं भवेत् केषाञ्चित् बुद्धेः परिपक्वता यतः स्वीकृता तत्र तेषामप्यपराधिता, तथाच सति वर्षाष्टकात् परतो
दीक्षादानं किमिव बुद्धिपरिपक्वताविषयं न स्यात् ?, तथा च स एव दीक्षार्हस्य कालो निर्णीतः श्रीमद्भिः, तथैव भुक्तभोगानामभुक्तभोगानां च
कुटुम्बयुतानामितरेषां च दीक्षा सपूर्वपक्षं निर्णीता, निर्णीतं च वैराग्यबुद्धेः प्राबल्यं, स्वजनकृतशोकाक्रन्दनविलापानां तमन्तरा स्वजन-
कृताकार्यस्यापि च कर्मबन्धाहेतुत्वं, निरस्ता चोत्थाप्य पूर्वपक्षं गृहाश्रमस्योत्तमता, तथाच आधुनिकानां बालदीक्षादिविषयः प्रलापो दुरापास्तप्रसर
एव, विशेषार्थिना तु विलोकनीयः सविवरणः प्रस्तुत एवाधिकारोऽत्रत्यः, यथाच तैरेव पूज्यैः पञ्चसूत्रीविवरणे मातापितराभ्यां अमुत्क-

लितस्यापि स्वश्रेयसे प्रव्रज्या प्रत्यपादि तथाऽत्र बालस्यापि दीक्षा प्रत्यपादि, न च वाच्यं मातापितृभ्यामदत्तस्य दीक्षादाने शैक्षनिष्फेटिकानामा दोषः श्रीनिशीथचूर्णिप्रभृतिषु श्रूयते तत्कथमेवं प्रतिपादनं सूरीणां जाघटीति ?, यतः शैक्षनिष्फेटिका कदा भवति कदा च न भवतीत्येव चेच्चिन्त्यते तदा वाचाटतायाः स्वयमेवापगमो भविष्यति, शास्त्रकारा हि महात्मानः न कदाचनापि स्वश्रेयोनिबन्धनभूतां दीक्षां सर्वदा निषेधयेयुः अज्ञानमातापित्राद्यालम्बनेन, शैक्षनिष्फेटिका हि अर्वाक् षोडशभ्यो वर्षेभ्यः, षोडशवर्ष्याः परतस्तु मातापितरौ दीयेतां तं सुतादिकं मा वा परं न तत्र शैक्षनिष्फेटिका, यत आहुः पञ्चकल्पभाष्यकाराः—"अपडुप्पण्णो बालो सोलसवरिसूणो अहव अनिविट्ठो। अम्मापिउअविदिण्णो न दिक्खई तस्स वऽण्णतस्स ॥५२४॥ (नि. उ. ११–४४८ अपि) जो सो अप्पडिपुण्णो विरट्ठवरसूण अहव अणिविट्ठो। तं दिक्खत अविदिण्णं तेणो परओ अतेणो उ ॥ ५२७ ॥" तथाच भाष्यकाराः शैक्षनिष्फेटिकां परतः षोडशवर्ष्या न मन्वते इति सिद्धं, राजकीयशासनं तु पुरुषस्य चतुर्दशवर्ष्याः स्त्रियाश्च षोडशवर्ष्याः परतो नापहरणापराधं प्रणिगदति, तथा च श्रीमदाप्तवचनानां राजकीयशासनस्य च अपेक्षया अर्वाक् षोडशवर्ष्या एव मातापित्रनुज्ञापेक्षा, न परत इति सिद्धं, एवं च सति वाचाटानां वक्रं श्रद्धानुसारिभिः पिहितमेव बोध्यं, तैः सर्वदैव मातापित्रनुज्ञामन्तरेण दीक्षणे शिक्षनिष्फेटिकादोषस्योद्घोषणात्, एवं यथा दीक्षाग्राहकाणां सौकर्यं विहितं श्रीमद्भिः तथैव दीक्षाया दायकानां ग्राहकाणां च अविधिना दीक्षादानादानाद्यावनर्थपरम्परापि या दर्शिता सा नोपेक्षणीयैव सत्पुरुषैः, एवं प्रथमवस्तुनि प्रव्रज्याविधिं सप्तविंशत्यधिकया द्विशत्या गाथानां प्रपञ्च्य प्रतिदिनक्रियायां प्रतिलेखनादीनि दश द्वाराणि सविस्तरमभिहितानि, अत्र चैकोनाशीत्यधिकद्विशतीतमगाथाया वृत्तौ 'स्तोकापराधं बहुगुणं मासकल्पाविहारवत् सर्वेषां जिनमतानुसारिणां तत् प्रमाणमेवे'ति वृत्तिवाक्यलेशमवलंब्य ररटननिपुणरसनो जिनदत्तः खरविरुद्धारको रारटीति यदुत अधुना मासकल्पेन विहारस्य कथनं करणं चोत्सूत्रमेव,

|| ३ ||

|| २ ||

परं विचारशून्यमेव तत्, यतो न तत्र मासकल्पविच्छेदो यथा खरेण स्वकुलके प्रत्यपादि तथा प्रतिपादितः, किंतु यः कश्चित् किंचित् कारणमालंब्य मासकल्पेन विहारं न कुर्यात् तथापि अपवादपदत्वात् तदाचरणस्य तदाभाव्यं न कोऽपि जिनमतानुसारी छिंद्यात्, यत आहुः भाष्यकाराः—"जइ होइ खेत्तकप्पो असती खेत्ताण होज्ज बहुगावी । खेत्तेण य कालेण य सव्वस्सवि उग्गहो णगरे ॥ २४५० ॥" तथा क्षेत्राभावमाश्रित्य कादाचित्कविहरणाभावमाश्रित्य साधारणक्षेत्रस्याभाव्यताविषयमेतत्, कथमन्यथा श्रीमद्भिरेव प्रतिपादितं मासाद्यतिक्रमे वसतेर्दुष्टत्वं "उउमासं समईआ०" (७१३) गाथायां, कथं च 'अप्पडिबद्धो अ सया गुरूवएसेण सव्वभावेसु । मासाइविहारेणं विहरिज्ज जहोचियं नियमा ॥ ८९५ ॥ मोत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि उ विहारो" इत्येवं मासादिकल्पस्य नियततां एते प्रतिपादयेयुः?, सूत्रकारा अपि श्रीमत्याचारांगे एवमेवाहुः कालातिक्रान्तां वसतिं दुष्टतया 'से आगंतागारेसु वा ४ जे भयंतारो उडुबद्धियं वा वासावासियं वा कप्पं उवाइणित्ता तत्थेव भुज्जो संवसंति अयमाउसो ! कालाइक्कंतकिरिया भवति' वृत्तिकारा अप्याहुः—"तेषु आगन्तागारादिषु ये भगवन्तः ऋतुबद्धं शीतोष्णकालयोर्मासकल्पं 'उपनीय' अतिवाह्य वर्षासु वा चतुरो मासान् अतिवाह्य तत्रैव पुनः कारणमन्तरेणासते अयमायुष्मन् ! कालातिक्रमदोषः संभवति" एवं च सति मासकल्पविहारस्योच्छेदो न सूत्रकृद्भिः संमतः न च वृत्तिकृद्भिः श्रीशीलांकाचार्यः, नच श्रीमद्भिर्हरिभद्रसूरिभिः, किंतु खराणां स्वस्वभावतः कटुरसनपरायणतया जातं तदुद्भावनं, तथा च मासकल्पादिविहारिणामुत्सूत्रतामापादयतः जिनदत्तस्यैव तथात्वं दुर्निवारमेव, एतावल्लिखनं तु कश्चित् खरात्मज एवं मा रटीद् यदुत संस्थयैव मासकल्पविहारोच्छेदः प्रकटितः, यतस्तादृशामेतादृश एव स्वभावः, कथमन्यथा श्रीमत्यां पञ्चाशकवृत्तौ धर्मसंग्रहवृत्तौ च वन्दनाद्यपेक्षं सामायिकक्रियाया अनु ईर्याप्रतिक्रमणं यन्मुद्रितं तत् स्वोत्सूत्रमूलकमतपोषकतया स प्रकटयेत्, तथा चैतदुल्लेखे नास्माकं मनीषा, किंतु मा भूत् तेषां तथा रटनं तेन भद्रकाणां श्रामणं

चेति दिङ्मात्रमेव प्रदर्शितं, एवं चानेकातिगंभीरविषययुतं द्वितीयं वस्तु समाप्य तृतीये उपस्थापनायाः काल आवश्यकता व्रतानामतिचाराणां प्रव्रज्यामुण्डनादीनां च स्वरूपं यथायथमाख्यायि, तुर्ये च आचार्यगणानुज्ञाभिधे वस्तुनि आचार्यस्य गीतार्थताया नियमो निवेदितो, निवेदितं च त्रिवर्ष्यादिपर्यायेणैव साधोरेव सूत्रादीनामध्यापनं, तथा च यः कश्चित् सूत्रोक्तमुल्लंघ्य श्रावकाणामशेषसूत्रार्हतां प्रतिपादयति श्रीस्थानाङ्गोक्तं चोपष्टम्भादिकं साधुगतमपि श्रावकादिनिश्रया व्याख्याति स तु न्यायपथोत्तीर्ण एव बोध्यः, अत्रैव तुरीये वस्तुनि प्रवर्त्तिन्याः स्वलब्धिः स्वशिष्यासमुदायमुद्दिश्य व्याख्यातेति आर्यासाम्राज्यस्य समूलकाषंकपत्वं संपादितं, पञ्चमे च संलेखनाभिधाने वस्तुनि संलेखनाया विधिः आवश्यकता तत्र विधेया भावनाः पादपोपगमनादिविधयः आराधनाः तत्फलं लेश्याशुद्धिः प्रस्तुतानां पञ्चानां वस्तूनां फलं च त्रैकालिकमिति प्रतिपादयाञ्चक्रुः श्रीमन्तः, एवं चानेकेषामुपयुक्ततमानां विषयाणामत्रोल्लेखादनन्यसाधारणोऽयं ग्रन्थरत्नतया बिभर्त्ति शोभामिति उन्मुद्रणमेतस्यारब्धं संस्थयैतया, न चास्य प्राक् केनाप्यकारि उन्मुद्रणं न च भाण्डागारेषु प्राचुर्येणास्य पुस्तकानि, शुद्धानां प्रतीनां तु असंभव एवेति यतितमस्योन्मुद्रणादौ, परमप्रामाण्याच्चास्य सहस्रशो ग्रन्थान्तरेष्वस्य साक्षितया न्यास इति मूलग्रन्थस्यापि पार्थक्येनोन्मुद्रणमत्र कृतमस्ति, कृतेऽप्यत्र शोधनादियत्ने यत् किञ्चित् शोधनादौ स्खलितं स्यात् तत् प्रमार्जनीयं धीधनैः ज्ञापनीयं च तत् यतो वयं द्वितीयावृत्तौ ततोऽर्वाग् वा तत् शोधयिष्याम इति निवेदयन्त्यानन्दसागराः । १९८३ कार्त्तिकशुक्ला नवमी

वह्निवसंकचन्द्राब्दे नवम्यां कार्त्तिके सिते । सादरीग्रामसंस्थेनानन्देनान्दि ह्ययं मुदा ॥ १ ॥

# अथ श्रीपञ्चवस्तुग्रन्थरत्नस्य वृद्धविषयानुक्रमः ।

गाथाङ्कः

१२२ षण्मासीं परीक्षा

१३३–१६३ सूत्रदानं जिनपूजा सामायिकारोपणं लिंगदानं रजोहरणस्य लिंगत्वं ( उपकरणतासिद्धिः ) शेषविधिः पञ्चदशांगानि

१६४–१७९ विधेरावश्यकता, तत्र व्यभिचारमृषावादादिदोषपरिहारः, लिंगफलं, व्यवहारप्राबल्यं

१८०–२२८ गृहाश्रमश्रेष्ठत्वनिरासः, पुण्याद्वैराग्यं, इच्छानिवृत्तौ सुखं, यथापर्यायं लेश्याशुद्धिः तपआदेरदुःखता, अन्नादेर्ग्रहणमप्यनुष्ठानं, सारम्भाणां भिक्षा विराधनाफलं, अभयदानं परोपकारः, स्तेनदृष्टान्तः,

## २ प्रतिदिनक्रियावस्तु

२२९ क्रियया प्रव्रज्यासाफल्यं

गाथाङ्कः

२३० प्रतिलेखनादीनि दश द्वाराणि

२३१–२६६ प्रतिलेखनाया गुणः क्रमः ऊर्ध्वस्थिरात्वरितप्रस्फोटनप्रमार्जनं ( अनर्तितावलितामोषलिदोषाः ) ( आरभडासंमर्दोऽस्थानस्थापनप्रस्फोटनाविक्षिप्तावेदिकादोषाः ) अन्यूनातिरिक्तविपर्यासभंगाः ८, कालेऽनादेशा आदेशश्च, वसतिप्रमार्जने कालः दण्डकप्रोञ्छनं

२६७–२८५ पात्रकप्रमार्जने विधिः मूषकरजआदिरक्षा सिक्कं आचरणाप्रामाण्यं धरणबन्धने

२८२–३४२ भिक्षाया निर्गमविधिः प्रयोजनं यस्य योगः अभिग्रहभेदाः आगमनं विवेचनं आलोचनं नैषेधिकी अंजली दण्डादिमोक्षणं शुद्धिः कायोत्सर्गः ( न स्तवचिन्तनं ) व्याक्षिप्तत्वादौ नालो-

गाथाङ्कः

चना नृत्यादिवर्जनं ओघालोचना प्रमार्जनाप्रतिलेखने भक्तादिदर्शनं कायोत्सर्गः

३४३—३६९ मण्डलीविधिः निमन्त्रणं जीर्णाभिनवश्रेष्ठिदृष्टान्तः स्वाध्यायभावना भोजनविधिः रागादिहानिः वैयावृत्त्यादीनि

३७०—३९२ विकृतेस्त्यागः भेदा निर्विकृतिकानि लेपकृतं आहारमानं पात्रक्षालनं प्रत्याख्यानं प्रच्छन्नभोजनता

३९३—४३३ संज्ञायाः कालः संघाटकः नियमद्रवग्रहणं गमनविधिः स्थण्डिलभेदाः ( १०२४ ) आपातसंलोकवर्जनं उपघातदोषाः अशुषिरं अचिरकालकृतं विस्तीर्णं दूरावगाढं आसन्नबिलवर्जनं पूर्वदिगादिवर्जनं संसक्तग्रहणिविधिः प्रमार्जनाव्युत्सर्जनं आपातेऽपवादः

गाथाङ्कः

४३४—४९२ अपराह्णप्रतिलेखना स्वाध्यायः कालोच्चारप्रश्रवणभूमिप्रेक्षणं आवश्यकं कायोत्सर्गः आलोचना क्षामणाया आचरणा रत्नाधिकक्षामणा चारित्राद्युत्सर्गाः स्तुतयः देवतोत्सर्गः

४९३—५०५ प्राभातिकप्रतिक्रमणं तपश्चिन्ता

५०६—५५४ प्रत्याख्यानानि आकाराः आकारेष्वदोषता, त्रिविधमपि न बाधकं, प्रत्याख्याने भोगाभोगार्थता दानं वैयावृत्यं भरतज्ञातं स्पर्शनाद्याः शुद्धयः बहुवेलक्रिया प्रतिलेखना

५५५—५६९ स्वाध्यायगुणाः आत्महितज्ञानं भावसंवरः संवेगः निष्कम्पता तपो निर्जरा परदेशकता अविधौ दोषाः

५७०—६०९ प्रव्रज्यामुण्डनादिभिर्योग्यता सूत्राध्ययनपर्यायाः उपधानविधिः गुरुशुद्धिः परिणामप्रामाण्यं

गाथाङ्कः

## ३ उपस्थापनावस्तु

६१०–६७८ उपस्थापनाया योग्याः भूमयः पितापुत्रादिविधिः अप्रज्ञापनीयेऽपि सामायिकं आकर्षाः पृथ्व्यादीनां सजीवता व्रतषट्कं तदतिचाराः परीक्षा उपस्थापनाविधिः मण्डल्याचाम्लानि

६७८–७०५ गुरुगच्छादौ यत्नः गुरुसेवाफलं गच्छवासः पार्थक्ये हेतुः

७०६–७३७ वसतेर्मूलोत्तरगुणाः कालातिक्रान्ताद्या दोषाः (१०) स्त्रीपशुपण्डकरहिता वसतिः पार्श्वस्थादिसंगवर्जनं संगात् दोषाः

७३८–७६८ उद्गमोत्पादनैषणामण्डलीदोषाः

७६९–८३९ उपकरणानि जिनकल्पिकानां स्थविराणामार्याणां च, उत्कृष्टादिविभागः पात्रपात्रबन्धप्रमाणं नन्दीपात्रं गोच्छके प्रयोजनं, केसरिकायाः पटलकानां स्वरूपं प्रमाणं प्रयोजनं च, रजस्त्राणे प्रमाणं सप्रयोजनं पात्रप्रयोजनं कल्पानां मानं प्रमाणं प्रयोजनं च, रजोहरणमुखवस्त्रिकामात्रकचोलपट्टककमढकावग्रहानन्तकपट्टार्धोरुकनिवसनीउत्कक्षिकावैकक्षिकासंघाटीनां मानादि, पीठकनिषद्यादण्डकादिष्वौपग्रहिकेषु जघन्यादिविभागः, औघिकौपग्रहिकयोर्लक्षणं

८४०–८६४ तपसः कर्तव्यता भेदाः विवेकहेतुरचितमांसता पीडायामपि धर्मध्यानवृद्धिः क्षायोपशमिकताऽस्य

८६५–८७४ प्रतिपक्षाशयेन सूक्ष्मातिचारत्यागः क्षुद्रातिचाराणां मानुष्ये फलं

गाथाङ्कः

८७५–८९४ अस्थैर्यं जीवितयौवनर्धिप्रियसंयोगादः विषयाणां क्रिया अर्थस्य च स्वरूपं

८९५–९०९ मासकल्पादेर्नियतता पूर्वसाधुचरितकथा चरण-रक्षा

९१०–९३० विधेः प्राधान्यं द्रव्यचरणावश्यकता मरुदेव्या-हरणस्याश्चर्यता

## ४ अनुज्ञावस्तु

९३१–९७१ अनुयोगे योग्याः, कालोचितसूत्रार्थता निश्च-यार्थता दानविधिः मन्त्रदानं सूरिवन्दनं शंसा कालप्रतिक्रमणं

९७२–९८४ मध्यस्थबुद्धियुतधर्मार्थिप्राप्तेषु व्याख्यानं, परिणा-मकादिस्वरूपं

९८५–९९० उपसंपद्विधिः, आभाव्यं प्रयोजनं, च।

गाथाङ्कः

९९१–१०१९ कथनविधिः कालाद्यालम्बननिरासः प्रमार्जना-निषद्यादिविधिः कायोत्सर्गः श्रवणविधिः चि-न्तकवन्दना दृष्टिवादोद्धृतनन्द्यादीनां व्याख्या

१०२०–१०७९ कषच्छेदतापस्वरूपं सम्यक्त्वं श्रुतं जीववीर्यफलं कर्मवादानेकान्तिकता कालस्वभावाद्या हेतवः तत्स्वभावता द्रव्यभावसम्यक्त्वे कषच्छेदतापैरे-शुद्धताऽन्येषां

१०८०–१११० जीवादीनां सत्त्वासत्त्वे नित्यानित्यत्वे जीवदेह-योर्भेदाभेदौ बन्धसुखादिसत्ताऽनादिता च

११११–१३१४ स्तवपरिज्ञायां द्रव्यभावस्तवौ जिनभवनकारणवि-धिः अप्रीतिपरिहारः गुर्वागमनदर्शनादिना स्वा-शयवृद्धिः जिनबिम्बकारणविधिः आज्ञया द्रव्य-स्तवत्वं यतियोगतुल्यता अभिष्वंगवर्जनं बिम्ब-

गाथाङ्कः

## २ उपस्थापनावस्तु

गाथाङ्कः

८७५–८९४ अस्थैर्यं जीवितयौवनर्धिप्रियेयोगादः विषयाणां स्त्रिया अर्थस्य च स्वरूपं

८९५–९०९ मासकल्पादेर्नियतता पूर्वसाधुचरितकथा चरण-रक्षा

९१०–९३० विधेः प्राधान्यं द्रव्यचरणावश्यकता मरुदेव्या-हरणस्याश्चर्यता

४ अनुज्ञावस्तु

९३१–९७१ अनुयोगे योग्याः, कालोचितसूत्रार्थता निश्च-यार्थता दानविधिः मन्त्रदानं सूरिवन्दनं शंसा कालप्रतिक्रमणं

९७२–९८४ मध्यस्थबुद्धियुतधर्मार्थिप्राप्तेषु व्याख्यानं, परिणा-मकादिस्वरूपं

९८५–९९० उपसंपद्विधिः, आभाव्यं प्रयोजनं, च।

गाथाङ्कः

९९१–१०१९ कथनविधिः कालाद्यालम्बननिरासः प्रमार्जना-निषद्यादिविधिः कायोत्सर्गः श्रवणविधिः चि-न्तकवन्दना दृष्टिवादोद्धृतनन्द्यादीनां व्याख्या

१०२०–१०७९ कषच्छेदतापस्वरूपं सम्यक्त्वं श्रुतं जीववीर्यफलं कर्मवादानेकान्तिकता कालस्वभावाद्या हेतवः तत्स्वभावता द्रव्यभावसम्यक्त्वे कषच्छेदतापैः शुद्धताऽन्येषां

१०८०–१११० जीवादीनां सत्त्वासत्त्वे नित्यानित्यत्वे जीवदेह-योर्भेदाभेदौ बन्धसुखादिसत्ताऽनादिता च

११११–१३१४ स्तवपरिज्ञायां द्रव्यभावस्तवौ जिनभवनकारणवि-धिः अप्रीतिपरिहारः गुर्वागमनदर्शनादिना स्वा-शयवृद्धिः जिनबिम्बकारणविधिः आज्ञया द्रव्य-स्तवत्वं यतियोगतुल्यता अभिष्वंगवर्जनं बिम्ब-

गाथाङ्कः

स्थापनादेः सुगत्यादि स्तवादेर्भावस्तवत्वं अष्टादश-सहस्रशीलांगानि अपवादेऽव्यबाधः आज्ञापारत-त्र्यं एकाग्रमनस्कता मोहविषघातनाद्याः साधु-गुणाः अष्टभिर्भवैर्मोक्षः द्रव्यभावयोरनुविद्धता यतेर्द्रव्यस्तवानुमोदनादि वल्यादिवत् औपचारि-कविनयता करणमाश्रित्य निषेधः वैदिकीहिंसा-समानतानिरासः यतनातो निवृत्तिः शिल्पादेरिव निर्दोषता उपकाराभावेऽपि साफल्यं पूजायाः अपौरुषेयवेदखण्डनं दाहवत्सदोषता हिंसायाः द्रव्यस्तवासमर्थस्य न भावस्तवः, दानशीलतपो-भावनानां क्रमः

१३१५–१३६४ गणस्वामिलक्षणानि प्रवर्त्तिन्याः स्वरूपं गीतार्थ-तानियमः जाताजातभेदौ प्रवर्त्तिन्याः शिष्या

गाथाङ्कः

अपेक्ष्य सलब्धिकता गणानुज्ञाविधिः गणग-णिनोः शिक्षा गुरुकुलवासफलं

## ५ संलेखनावस्तु

१३६५–१४८२ अव्युच्छित्तिमनस्कता गण्यादीनामभ्युद्यतविहार-योग्यता इत्वरो गणनिक्षेपः उपकरणं इन्द्रियादि-परिकर्म तपःसत्त्वसूत्रैकत्वबलभावनाः परिकर्म-विधि. जिनकल्पांगीकारविधिः तस्य सामाचार्यः श्रुतसंहननोपसर्गातङ्कवेदनाकतिजनस्थण्डिलवस-तिकियच्चिरोच्चारप्रश्रवणावकाशतृणफलकसं-रक्षणसंस्थापनप्राभृतिकाग्निदीपापद्दानकतिवास-मिक्षाचर्यापानकलेपालेपाचामाम्लप्रतिमामास-कल्पाः द्वाराणि जिनकल्पे

१४८३–१५२२ क्षेत्रकालचारित्रतीर्थपर्यायागमवेदकल्पलिंगलेश्या-

॥ इति श्रीपञ्चवस्तुग्रन्थरत्नस्य बृहद्विषयानुक्रमः ॥

# पुस्तकोद्धारीया ग्रन्था ।

१ श्रीवीतरागस्तोत्रम्
२ श्रीश्रमणप्रतिक्रमणसूत्रवृत्तिः
३ श्रीस्याद्वादभाषा
४ श्रीपाक्षिकसूत्रम्
५ श्रीअध्यात्ममतपरीक्षा
६ श्रीषोडशकप्रकरणम्
७।६१ श्रीकल्पसूत्रसुबोधिका वृत्तिः
८ श्रीवन्दारुवृत्तिः
९ श्रीदानकल्पद्रुमः
१० योगफीलोसोफी ( अंग्रेजी )
११ श्रीजल्पकल्पलता
१२ श्रीयोगदृष्टिसमुच्चयः
१३ कर्मफीलोसोफी ( अंग्रेजी )

१४-२०-२२-३०-३२-४३-६६-६९ आनन्द
१५ श्रीधर्मपरीक्षा
१६ श्रीशास्त्रवार्तासमुच्चयः
१७ श्रीकर्मप्रकृतिः
१८ श्रीकल्पसूत्रम् मूलं
१९ श्रीपञ्चप्रतिक्रमणसूत्राणि
२१ श्रीउपदेशरत्नाकरः
२३ श्रीचतुर्विंशतिजिनानन्दस्तुतिः
२४ श्रीपद्मपुरुषचरित्रम्
२५ श्रीस्थूलभद्रचरित्रम्
२६।४५ श्रीधर्मसंग्रहः
२७ श्रीसंग्रहणिसूत्रम्
२८ श्रीउपदेशशतक–सम्यक्त्वपरीक्षे
२९ श्रीललितविस्तरा

३१।३७ श्रीअनुयोगद्वाराणि
३३।३६।४१ श्रीउत्तराध्ययनानि
३४ श्रीमलयसुंदरीचरित्रम्
३५ श्रीसम्यक्त्वसप्ततिका
३८ गुणस्थानक्रमारोहः
३९-४२ धर्मसंग्रहणी
४० धर्मकल्पद्रुमः
४४ श्रीपिण्डनिर्युक्तिः
४६।४९ श्रीउपमितिभवप्रपञ्चा कथा
४७ श्रीदशवैकालिकसूत्रं
४८ श्राद्धप्रतिक्रमणसूत्रवृत्तिः
५० जीवाजीवाभिगमसूत्रं ( सवृत्ति )
५१ सेनप्रश्नः

५२।५४ जम्बूद्वीपप्रज्ञप्तिः
५३ आवश्यकटिप्पणम्
५५ देवसीराइप्रतिक्रमणसूत्राणि
५६ श्रीपालचरित्रं ( संस्कृत )
५७ सूक्तमुक्तावली
५८।६४ प्रवचनसारोद्धारः
५९ तन्दुलवैचारिकं ( सवृत्ति )
६० विंशतिस्थानकं चरित्रं
६२ सुबोधा सामाचारी
६३ श्रीपालचरित्रं प्राकृतं
६५ लोकप्रकाशः ( द्रव्य. )
६७ तत्त्वार्थः ( ५ अ. )
६८ नवपदलघुवृत्ति.
६९ पंचवस्तुक.



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| जन्म १९०९ वैक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां, सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे<br>पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |
|---|---|

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 1853 A. D. Surat,** **Died 13th January 1906 A. D. Bombay.**

9-24.-Copies 5000.

श्रेष्ठिदेवचन्द्रलालभातृ–जैनपुस्तकोद्धार–ग्रन्थाङ्के–

निर्दलिताज्ञानसम्भारप्रसरचतुर्दशप्रकरणशतप्रसादसूत्रधारकल्पप्रभुश्रीहरिभद्र-

सूरिविरचितस्वोपज्ञशिष्यहिताव्याख्यासमेत–

# श्रीपञ्चवस्तुकग्रन्थः ।

ॐ नमः श्रीसर्वज्ञाय ।

प्रणिपत्य जिनं वीरं, नृसुरासुरपूजितम् । व्याख्या शिष्यहिता पञ्च–वस्तुकस्य विधीयते ॥ १ ॥

इह हि पञ्चवस्तुकाख्यं प्रकरणमारब्धुकाम आचार्यः शिष्टसमयप्रतिपालनाय विघ्नविनायकोपशान्तये प्रयोजनादि-प्रतिपादनार्थं चादावेवेदं गाथासूत्रमुपन्यस्तवान्—

**णमिऊण वद्धमाणं सम्मं मणवयणकायजोगेहिं । संघं च पंचवत्थुगमहक्कमं कित्तइस्सामि ॥१॥**

तत्र शिष्टानामयं समयः, यदुत–'शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्त्तन्ते' इति, अयमपि आचार्यो नहि न शिष्ट ! इत्यतः तत्समयपरिपालनाय, तथा श्रेयांसि बहुविघ्नानि भवन्तीति, उक्तं च– "श्रेयांसि बहुविघ्नानि भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥ १ ॥" इदं च प्रकरणं सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतम्, अतो माभूद्विघ्न ! इति विघ्नविनायकोपशान्तये 'नमिऊण वद्धमाणं सम्मं मणवयणकायजोगेहिं संघंच' इत्यनेनेष्टदेवतास्तवमाह, प्रेक्षापूर्वकारिणश्च प्रयोजनादिशून्ये न प्रवर्त्तन्ते इति, उक्तं च–"सर्वस्यैव हि शास्त्रस्य कर्म्मणो वाऽपि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत् तत्केन गृह्यते ॥ १ ॥" इत्यादि, अतः प्रयोजनादिप्रतिपादनार्थं च 'पंचवत्थुगमहक्कमं कित्तइस्सामि' इत्येतदाह–प्रकरणार्थकथनकालोपस्थितपरसम्भाव्यमानानुपन्यासहेतुनिराकरणार्थं वा; तथाहि–पञ्चवस्तुकाख्यं प्रकरणमारभ्यत इत्युक्ते सम्भावयत्येवं वादी परः–नारब्धव्यमेवेदं प्रकरणं, प्रयोजनरहितत्वात्, उन्मत्तकविरुतवत् । तथा निरभिधेयत्वात्, काकदन्तपरीक्षावत् । तथाऽसम्बन्धत्वात्, दशदाडिमानीत्यादि वाक्यवत् । अतोऽमीषां हेतूनामसिद्धतोद्बिभावयिषयेत्येतदाह 'पंचवत्थुगमहक्कमं कित्तइस्सामि' एष तावद्गाथाप्रस्तावः समुदायार्थश्च ॥ अधुनाऽवयवार्थोऽभिधीयते–नत्वा प्रणम्य, कं ? इत्याह–वर्द्धमानं–वर्त्तमानतीर्थाधिपतिं तीर्थकरं, तस्य हि भगवत एतन्नाम; यथोक्तं–'अम्मापिउसंति वद्धमाणे' इत्यादि, कथं 'नत्वा' इत्यत आह–'सम्यग्मनोवाक्काययोगैः'–सम्यगिति प्रवचनोक्तेन विधिना, मनोवाक्काययोगैर्म्मनोवाक्कायव्यापारैः, अनेनैवंभूतमेव भाववन्दनं

भवतीत्येतदाह च, मनोवाक्काययोगैरसम्यगपि नमनं भवतीति सम्यग्ग्रहणं; आह–एवमपि सम्यगित्येतदेवास्तु, अलं मनोवाक्काययोगग्रहणेन !, सम्यग्नमनस्य तदव्यभिचारित्वात्, नैतदेवम्, एकपदव्यभिचारेऽपि "अबूद्रव्यं पृथिवीद्रव्यं" इत्यादौ विशेषणविशेष्यभावदर्शनादिति । न केवलं वर्द्धमानं नत्वा, किन्तु सङ्घं च सम्यग्दर्शनादिसमन्वितप्राणिगणं च नत्वा, किम् ? इत्याह–पञ्चवस्तुकं यथाक्रमं कीर्त्तयिष्यामि, प्रव्रज्याविधानादीनि पञ्चवस्तूनि यस्मिन् प्रकरणे तत्पञ्चवस्तु, पञ्चवस्त्वेव पञ्चवस्तुकं ग्रन्थं, यथाक्रममिति यो यः क्रमो यथाक्रमः यथापरिपाटि, कीर्त्तयिष्यामि–संशब्दयिष्यामि । इति गाथार्थः ॥ १ ॥ अधिकृतानि पञ्चवस्तून्युपदर्शयन्नाह—

**पव्वज्जाए विहाणं पइदिणकिरिया वएसु ठवणा य । अणुओगगणाणुण्णा संलेहण मो इइ पंच ॥२॥**

'प्रव्रज्यायाः' वक्ष्यमाणलक्षणायाः 'विधानम्' इतिविधिः तथा 'प्रतिदिनक्रिया' इति, प्रतिदिनं–प्रत्यहं क्रिया–चेष्टा प्रतिदिनक्रिया, प्रव्रजितानामेव चक्रवालसामाचारीति भावः । तथा 'व्रतेषु स्थापना च' इति, "हिंसाऽनृतस्तेयाऽब्रह्मपरिग्रहेभ्यो विरतयः व्रतानि" तेषु स्थापना–सामायिकसंयतस्योपस्थापनेत्यर्थः । ननु व्रतानां स्थापनेति युक्तम्, तत्र तेषामारोप्यमाणत्वात्; उच्यते, सामान्येन व्रतानामनादित्वात् तेषु व्रतेषु तस्योपस्थाप्यमानत्वात्, इत्थमप्यदोष एव । तथा 'अनुयोगगणानुज्ञा' इति अनुयोजनमनुयोगः, सूत्रस्य निजेनाभिधेयेन सम्बन्धनं व्याख्यानमित्यर्थः, गणस्तु गच्छोऽभिधीयते, अनुयोगश्च गणश्चानुयोगगणौ तयोरनुज्ञा प्रवचनोक्तेन विधिना स्वातन्त्र्यानुज्ञानमिति । 'संलेखना' चेति संलिख्यते शरीरकषायादि यया तपःक्रियया सा संलेखना, यद्यपि सर्वैव तपः क्रिये ( त्थं ) यं तथाऽप्यत्र चरमकालभाविनी

विशिष्टैव संलेखनोच्यत इति, 'मो' इति पूरणार्थो निपातः इति, 'पञ्च' इति एवमनेनैव क्रमेण पञ्चवस्तूनि; तथाहि—प्रव्रज्याभिधाने सति सामायिकसंयतो भवति, संयतस्य प्रतिदिनक्रिया, क्रियावतश्च व्रतेषु स्थापना, व्रतस्थस्य चानुयोगगणानुज्ञे, सम्भवतश्चरमकाले च संलेखना। इति गाथार्थः ॥ २ ॥ साम्प्रतममीषामेव वस्तुत्वप्रतिपादनार्थमाह—

**एए चेव य वत्थू वसंति एएसु नाणमाईया। जं परमगुणा सेसाणि हेउफलभावओ हुंति ॥ ३ ॥**

'एतान्येव' प्रव्रज्याविधानादीनि शिष्याचार्यादिजीवद्रव्याश्रयत्वात् तत्त्वतस्तद्रूपत्वाद्—वस्तूनि, एतेष्वेव भावशब्दार्थोपपत्तेः, तथा चाह—'वसन्ति एतेषु' प्रव्रज्याविधानादिषु 'ज्ञानादयः' ज्ञानदर्शनचारित्रलक्षणाः, 'यत्' यस्मात् 'परमगुणाः' प्रधानगुणाः; एवमप्येतान्येवेत्यवधारणमयुक्तम्, अविरतसम्यग्दृष्ट्यादिविधानादीनांविशिष्टस्वर्गगमनसुकुलप्रत्यायातिपुनर्बोधिलाभादीनामपि च वस्तुत्वात्, इत्येतदाशङ्क्याह—'शेषाणि अविरतसम्यग्दृष्ट्यादिविधानादीनि 'हेतुफलभावतो भवन्ति' अविरतसम्यग्दृष्ट्यादीनि हेतुभावतः कारणभावेन, विशिष्टस्वर्गगमनादीनि तु फलभावतः कार्यभावेन वस्तूनि भवन्ति; तथाहि—अविरतसम्यग्दृष्ट्यादिविधानादीनाम् कार्याणि प्रव्रज्याविधानादीनि, अतो वस्तुकारणत्वात् तेषामपि वस्तुत्वमेव। विशिष्टस्वर्गगमनादीनि तु प्रव्रज्याविधानादिकार्याणि, अतो वस्तुकार्यत्वादमीषामपि वस्तुता, परिस्थूरव्यवहारनयदर्शनतः। तत्त्वतस्त्वधिकृतानामेव वस्तुत्वम्। इति गाथार्थः ॥ ३ ॥ आद्यद्वारावयवार्थाभिधित्सयैवाह—

**पव्वज्ज पढमदारं सा केणं केसि कमिव कहं वा । दायव्वत्ति निरुच्चइ समासओ आणुपुव्वीए ॥४॥दारं॥**

'प्रव्रज्या' वक्ष्यमाणशब्दार्था 'प्रथमद्वारम्' इह प्रकरणे प्रथमोऽधिकारः, सा नामादिभेदभिन्ना निरुच्यते– तथा 'केन' इति किंविशिष्टेनगुरुणा दातव्यैतन्निरुच्यते, तथा 'केभ्य' इति किंविशिष्टेभ्यः शिष्येभ्यो दातव्येति, तथा 'कस्मिन्' इति कस्मिन् वा क्षेत्रादौ, 'कथं वा' इति केन वा प्रश्नादिप्रकारेण 'दातव्या' इति न्यसनीया, 'निरुच्यते' निराधिक्येन प्रकटार्थतामङ्गीकृत्योच्यते निरुच्यते, 'समासतः' इति सङ्क्षेपेण, न पूर्वाचार्यैरिव विस्तरेणेति 'आनुपूर्व्या' इति आनुपूर्व्या परिपाट्या क्रमेणोच्यते । इति गाथार्थः ॥ ४ ॥ तत्र 'तत्वभेदपर्यायैर्व्याख्या' इति न्यायमङ्गीकृत्य तत्वतः प्रव्रज्यां प्रतिपादयन्नाह—

**पव्वयणं पव्वज्जा पावाओ सुद्धचरणजोगेसु । इअ मुक्खं पइवयणं कारणकज्जोवयाराओ ॥ ५ ॥**

'प्रव्रजनं प्रव्रज्या' प्र–इति प्रकर्षेण व्रजनं प्रव्रजनं, कुतः क्वेत्यत आह–'पापाच्छुद्धचरणयोगेषु' इह पापशब्देनं पापहेतवो गृहस्थानुष्ठानविशेषा उच्यन्ते, कारणे कार्योपचारात्–यथा "दधित्रपुषी प्रत्यक्षो ज्वर" इति, शुद्धचरणयोगास्तु संयतव्यापारा मुखवस्त्रिकादिप्रत्युपेक्षणादय उच्यन्ते 'इय' एवं 'मोक्षं प्रतिव्रजनं' प्रव्रज्या । कथमित्याह 'कारणे कार्योपचारात्' कारणे शुद्धचरणयोगलक्षणे मोक्षाख्यकार्योपचारात्–"यथा आयुर्घृतम्" इत्यायुषः कारणत्वाद् घृतमेवायुः,

इत्थं मोक्षकारणत्वात् शुद्धचरणयोगा एव मोक्ष इति, ततश्च मोक्षं प्रति प्रव्रजनं प्रव्रज्या । इति गाथार्थः ॥ ५ ॥ एष तावत् प्रव्रज्यातत्त्वार्थोऽधुना भेदत एनां व्याचिख्यासुराह—

**नामाइ चउब्भेआ एसा दव्वम्मि चरगमाईणं । भावेण जिणमयम्मि उ आरंभपरिग्गहच्चाओ ॥ ६ ॥**

'नामादिचतुर्भेदा एषा' इयं च प्रव्रज्या नामादिचतुर्भेदा भवति; तद्यथा—नामप्रव्रज्या स्थापना—द्रव्य—भाव प्रव्रज्या चेति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य नोआगमत एव ज्ञशरीरभव्यशरीरव्यतिरिक्तां द्रव्यप्रव्रज्यामाह—'द्रव्ये चरकादीनां' द्रव्य इति द्वारपरामर्शः, द्रव्यप्रव्रज्या चरकादीनां चरकपरिव्राजकभिक्षुभौतादीनां, द्रव्यशब्दश्चेहाप्रधानवाचको न तु भूतभविष्यद्भावयोग्यतावाचक इति । नोआगमत एव भावप्रव्रज्यामाह—'भावेन' इति भावतः परमार्थतः, 'जिनमत एव' रागादिजेतृत्वाज्जिनः, तन्मत एव वीतरागशासन एवेत्यर्थः । 'आरंभपरिग्रहत्यागः' वक्ष्यमाणारम्भपरिग्रहवर्ज्जनं जिनशासन एव अन्यशासनेष्वारम्भपरिग्रहस्वरूपानवगमात् सम्यक्त्यागासम्भवः । इति गाथार्थः ॥ ६ ॥ आरम्भपरिग्रहस्वरूपप्रतिपादनायाह—

**पुढवाइसु आरंभो परिग्गहो धम्मसाहणं मुत्तुं । मुच्छा य तत्थ बज्झो इयरो मिच्छत्तमाईओ ॥७॥**

'पृथिव्यादिषु' कायेषु विषयभूतेषु 'आरंभ' इत्यारम्भणमारम्भः सङ्घट्टनादिरूपः, परिग्रहणं 'परिग्रहः,' असौ द्विविधः बाह्योऽभ्यन्तरश्च, तत्र धर्मसाधनं मुखवस्त्रिकादि मुक्त्वा बाह्य इति सम्बन्धः, अन्यपरिग्रहणमिति गम्यते, मूर्च्छा च

तत्र धर्मोपकरणे बाह्य एव परिग्रह इति। इतरस्त्वान्तरपरिग्रहो मिथ्यात्वादिरेव, आदिशब्दादविरतिदुष्टयोगा गृह्यन्ते, परिगृह्यते तेन कारणभूतेन कर्मणा जीवः। इति गाथार्थः ॥ ७ ॥ त्यागशब्दार्थं व्याचिख्यासुराह—

**चाओ इमेसि सम्मं मणवयकाएहिं अप्पवित्तीओ। एसा खलु पव्वज्जा मुक्खफला होइ निअमेणं ॥८॥**

'त्यागः' प्रोज्झनम् 'अनयोः' आरम्भपरिग्रहयोः 'सम्यक्' प्रवचनोक्तेन विधिना 'मनोवाक्कायैः' त्रिभिरपि 'अप्रवृत्तिः' एव आरम्भे परिग्रहे च मनसा वाचा कायेनाप्रवर्त्तनमिति भावः। 'एषाखलु' इति एषैव 'प्रव्रज्या' यथोक्तस्वरूपा 'मोक्षफला भवति' इति, मोक्षः फलं यस्याः सा मोक्षफला भवति 'नियमेन' अवश्यंतया, भावमन्तरेणारम्भादौ मनोप्रवृत्यसम्भवात्। इति गाथार्थः ॥ ८ ॥ उक्ता प्रव्रज्या भेदतः, अधुनैतत्पर्यायानाह—

**पव्वज्जा निक्खमणं समया चाओ तहेव वेरग्गं। धम्मचरणं अहिंसा दिक्खा एगट्ठियाइं तु ॥ ९ ॥**

'प्रव्रज्या' निरूपितशब्दार्था, 'निष्क्रमणं' द्रव्यभावसङ्गात्, 'समता'—सर्वेष्विष्टानिष्टेषु 'त्यागः' बाह्याभ्यन्तरपरिग्रहस्य 'तथैव वैराग्यं' विषयेषु, 'धर्मचरणं' क्षान्त्याद्यासेवनम्, 'अहिंसा'—प्राणिघातवर्जनम्, 'दीक्षा'—सर्वसत्त्वाभयप्रदानेन भावसत्रं, 'एकार्थिकानि तु' एतानि प्रव्रज्याया एकार्थिकानि, तुर्विशेषणार्थः, शब्दनयाभिप्रायेण। समभिरूढनयाभिप्रायेण तु नानार्थान्येव, भिन्नप्रवृत्तिनिमित्तत्वात् सर्वशब्दानाम्। इति गाथार्थः ॥ ९ ॥ सेति व्याख्यातम्, अधुना केनेत्येतद् व्याख्यायते, तत्र योग्येन गुरुणा, स चेत्थंभूत इत्याह—

**पव्वज्जा जोग्गगुणेहिं संगओ विहिपवण्णपव्वज्जो । सेविअगुरुकुलवासो सययं अक्खलिअसीलोअ १०**

प्रव्रज्यायोग्यस्य प्राणिनो गुणाः 'प्रव्रज्यायोग्यगुणा' आर्यदेशोत्पन्नादयो वक्ष्यमाणाः; तथाऽन्यत्राप्युक्तम् "अथ प्रव्रज्याऽर्ह–आर्यदेशोत्पन्नः १ विशिष्टजातिकुलान्वितः २ क्षीणप्रायकर्म्ममलः ३ तत एव विमलबुद्धिः ४ दुर्लभं मानुष्यं जन्म मरणनिमित्तं सम्पदश्चपलाः विषया दुःखहेतवः संयोगो वियोगः प्रतिक्षणं मरणं दारुणो विपाक इत्यवगतसंसारनैर्गुण्यः ५ तत एव तद्विरक्तः ६ प्रतनुकषायोऽल्पहास्यादिः ७–८ कृतज्ञो ९ विनीतः १० प्रागपि राजाऽमात्यपौरजनबहुमतो ११ अद्रोहकारी १२ कल्याणाङ्गः १३ श्राद्धः १४ स्थिरः १५ समुपसम्पन्नश्चेति १६" एभिः 'सङ्गतो' युक्तः समेतः सन् किं? इत्याह–'विधिप्रपन्नप्रव्रज्यो' विधिना वक्ष्यमाणलक्षणेन प्रपन्नाऽङ्गीकृता प्रव्रज्या येन स तथाविधः, तथा 'सेवितगुरुकुलवासः' समुपासितगुरुकुल इत्यर्थः, 'सततं' सर्वकालं प्रवज्याप्रतिपत्तेरारभ्य 'अस्खलितशीलश्च' अखण्डितशीलश्च, चशब्दात् परद्रोहविरतिभावश्च इति गाथार्थः ॥ १० ॥

**सम्मं अहीअसुत्तो ततो विमलयरबोहजोगाओ । तत्तण्णू उवसंतो पवयणवच्छल्लजुत्तो अ ॥ ११ ॥**

'सम्यग्'–यथोक्तयोगविधानेन 'अधीतसूत्रः,–गृहीतसूत्रः 'ततो विमलतरबोधयोगात्' इति ततः सूत्राध्ययनाद्यः शुद्धतरावगमस्तत्सम्बन्धादित्यर्थः । किमित्याह 'तत्त्वज्ञः' वस्तुतत्त्ववेदी 'उपशान्तः' क्रोधविपाकावगमेन 'प्रवचनवात्सल्ययुक्तश्च'–प्रवचनमिह सङ्घः सूत्रं वा, तद्वत्सलभावयुक्तः । इति गाथार्थः ॥ ११ ॥

**सत्तहिअरओ अ तहा आएओ अणुवत्तगो अ गंभीरो। अविसाई परलोए उवसमलद्धीइकलिओअ १२**

'सत्त्वहितरतश्च' सामान्येनैव जीवहिते सक्तश्च 'तथा' न केवलमित्थंविधः किंतु 'आदेयोऽनुवर्त्तकश्च गम्भीरः' तत्रादेयो नाम ग्राह्यवाक्यः, अनुवर्त्तकश्च—भावानुकूल्येन सम्यक्पालकः गम्भीरो—विपुलचित्तः 'अविषादीपरलोके' न परिषहाद्यभिद्रुतः कायसंरक्षणादौ दैन्यमुपयाति, 'उपशमलब्ध्यादिकलितश्च' उपशमलब्ध्यु १ पकरणलब्धि २ स्थिरहस्तलब्धि ३ युक्तश्च। इति गाथार्थः ॥ १२ ॥

**तह पवयणत्थवत्ता सगुरू अणुन्नायगुरुपओ चेव। एआरिसो गुरू खलु भणिओ रागाइरहिएहिं ॥१३॥**

'तथा प्रवचनार्थवक्ता'—सूत्रार्थवक्तेत्यर्थः, 'स्वगुर्वनुज्ञातगुरुपदश्चैव' असति तस्मिन् दिगाचार्यादिना स्थापितगुरुपद इत्यर्थः, 'ईदृशो गुरुः' खलुशब्दोऽवधारणार्थः, ईदृश एव कालदोषादन्यतरगुणरहितोऽपि बहुतरगुणयुक्त इति वा विशेषणार्थः, 'भणितो रागादिरहितैः' प्रतिपादितो वीतरागैः। इति गाथार्थः ॥ १३ ॥

**एआरिसेण गुरुणा सम्मं परिसाइकज्जरहिएणं। पव्वज्जा दायव्वा तयणुग्गहनिज्जराहेउं ॥ १४ ॥**

'ईदृशेन गुरुणा' एवंविधेनाचार्येण 'सम्यग्' अविपरीतेन विधिना 'पर्षदादिकार्यरहितेन' सम्पूर्णा मे पर्षद् भविष्यति पानकादिवाहको वेत्याद्यैहिककार्यनिरपेक्षेण 'प्रव्रज्या दातव्या' दीक्षा विधेया, किं तर्ह्यङ्गीकृत्य? इत्यत्राह—'तदनुग्रहनिर्जराहेतोः' इति विनयानुग्रहार्थे कर्म्मक्षयार्थं च। इति गाथार्थः ॥ १४ ॥ ईदृशि गुरौ गुणमाह—

भत्तिबहुमाणसद्धा थिरया चरणम्मि होइ सेहाणं। एआरिसम्मि निअमा गुरुम्मि गुणरयणजलहिम्मि ॥

'भक्तिबहुमानौ' इति भक्तिर्बाह्यविनयरूपा बहुमानो भावप्रतिबन्धः एतौ भवतः शिक्षकाणामभिनवप्रव्रजितानामिति योगः, क्वेत्याह 'ईदृशि' एवंभूते 'गुरौ' आचार्ये 'नियमात्' नियमेन पुनरपि स एव विशिष्यते–'गुणरत्नजलधौ' गुणरत्नसमुद्र इति। ततः 'श्रद्धा स्थिरता' च 'चरणे भवति' इति; तथाहि–गुरुभक्तिबहुमानभावत एव चारित्रे श्रद्धास्थैर्यं च भवति नान्यथा। इति गाथार्थः ॥ १५ ॥ गुणान्तरमाह—

अणुवत्तगो अ एसो हवइ दढं जाणई जओ सत्ते। चित्ते चित्तसहावे अणुवत्ते तह उवायं च ॥ १६ ॥

'अनुवर्त्तकश्च एषो' ऽनन्तरोदितो गुरुर्भवति, 'दृढं' अत्यर्थं, कुत इत्याह–'जानाति यतः सत्त्वान्' प्राणिनः 'चित्रान्' अनेकरूपान् 'चित्रस्वभावान्' नानास्वभावान् 'अनुवर्त्त्यान्' इत्यनुवर्त्तनीयान् 'तथोपायं च' अनुवर्त्तनोपायं च जानाति। इति गाथार्थः ॥ १६ ॥ अनुवर्त्तनागुणमाह—

अणुवत्तणाए सेहा पायं पावंति जोग्गयं परमं। रयणंपि गुणक्करिसं, उवेइ सोहम्मणगुणेण ॥ १७ ॥

'अनुवर्त्तनया'–करणभूतया 'शिक्षकाः' 'प्रायो' बाहुल्येन कांकटुककल्पं[1] विहाय 'प्राप्नुवन्ति योग्यताम्' अपवर्गं प्रति 'परमां' प्रधानां, स्यादेतत् योग्य एव प्रव्रज्यार्ह इति किं गुरुणेत्येतदाशङ्क्याह–'रत्नमपि' पद्मरागादि 'गुणोत्कर्षं'

१ दुःखाङ्कसत्वम्, इत्यपि पाठः।

कान्त्यादिगुणप्रकर्षम् 'उपैति' 'सोहम्मणगुणेण' रत्नशोधकप्रभावेण वैकटिकप्रभावेणेत्यर्थः । एवं सुशिष्या अपि गुरुप्रभावेण । इति गाथार्थः ॥ १७ ॥ किञ्च—

**एत्थ य पमायखलिया पुव्वब्भासेण कस्स व न हुंति। जो ते वणेइ सम्मं गुरुत्तणं तस्स सफलंति ॥१८॥**

'अत्र च' प्रव्रज्याविधाने 'प्रमादस्खलितानि' इति प्रमादात् सकाशाद्दुश्चेष्टितानि 'पूर्वाभ्यासेन कस्य वा न भवन्ति', अनादिभवाभ्यस्तो हि प्रमादः न झटित्येव त्यक्तुं पार्यते । यस्तानि स्खलितानि 'अपनयति सम्यक्' प्रवचनोक्तेन विधिना 'गुरुत्वं तस्य सफलं' गुणगुरुत्वेन । इति गाथार्थः ॥ १८ ॥ एतदेव लौकिकोदाहरणेन स्पष्टयति—

**को णाम सारहीणं स होज्ज जो भद्दवाइणो दमए। दुट्ठे वि अ जो आसे दमेइ तं आसियं बिंति ॥१९॥**

'को नाम सारथीनां स भवेत् यो भद्रवाजिनः—' शोभनाश्वान् 'दमयेत्', न कश्चिदसौ असारथिरेवेत्यर्थः । दुष्टानपि तु योऽश्वान् दमयति—' शोभनान् करोति, 'तं सारथिं ब्रुवते' लौकिकाः । पाठान्तरे वा, 'तमाश्विकं ब्रुवते' । इति गाथार्थः ॥ १९ ॥ शिष्याननुपालनेन गुरोर्दोषमाह—

**जो आयरेण पढमं पव्वावेऊण नाणुपालेइ । सेहे सुत्तविहीए सो पवयणपच्चणीओ त्ति ॥२०॥**

'यो' गुरुः 'आदरेण'—बहुमानेन 'प्रथमं' प्रव्रज्यां ग्राहयित्वा पश्चात् 'नानुपालयति शिष्यकान् सूत्रविधिना', स किमित्याह—'स प्रवचनप्रत्यनीकः'—शासनप्रत्यनीकः । इति गाथार्थः ॥ २० ॥ एतदेवाह—

**अविकोविअपरमत्था विरुद्धमिह परभवे अ सेवंता। जं पावंति अणत्थं सो खलु तप्पच्चओ सव्वो ॥२१॥**

'अविकोपितपरमार्थः' अविज्ञापितसमयसद्भावात् 'विरुद्धं सेवमाना' इति योगः, 'इह परभवे च यं प्राप्नुवन्त्यनर्थं स खलु तत्प्रत्ययः सर्वः' अननुवर्त्तकगुरुनिमित्तः। इति गाथार्थः ॥ २१ ॥

**जिणसासणस्सवण्णो मिअंकधवलस्स जो अ ते दट्ठुं। पावं समायरंतो जायइ तप्पच्चओ सो वि ॥२२॥**

'जिनशासनस्यावर्णो' अश्लाघा 'मृगाङ्कधवलस्य' चन्द्रधवलस्य 'यश्च तान् दृष्ट्वा पापं समाचरतः' सेवमानान् 'जायते' जनितो भवति। 'तत्प्रत्ययोऽसावपि' अननुवर्त्तकगुरुनिमित्तोऽसावपि। इति गाथार्थः ॥ २२ ॥ अनुवर्त्तकस्य तु गुणमाह—

**जो पुण अणुवत्तेई गाहइ निप्फायइ अ विहिणाउ। सो ते अन्ने अप्पाणयं च पावेइ परमपयं ॥२३॥**

'यः पुनरनुवर्त्तते' स्वभावानुकूल्येन हिते योजयति 'ग्राहयति' क्रियां 'निष्पादयति च' ज्ञानक्रियाभ्यां 'विधिना' आगमोक्तेन 'स' गुरुः 'तान्' शिष्यान् 'अन्यान्' प्राणिनः 'आत्मानं च प्रापयति परमपदं' नयति मोक्षम्। इति गाथार्थः ॥ २३ ॥ एतदेव दर्शयति—

**णाणाइलाभओ खलु दोसा हीयंति वड्ढई चरणं। इअ अब्भासाइसया सीसाणं होइ परमपयं ॥ २४ ॥**

'ज्ञानादिलाभतः खलु' अनुवर्त्त्यमाना हि शिष्याः स्थिरा भवन्ति। ततो ज्ञानदर्शने लभन्ते, ततो लाभात्, खलु

शब्दोऽवधारणे, तत एव 'दोषा' रागादयो 'हीयन्ते' त्यज्यन्ते क्षीयन्ते वा। ततो 'वर्द्धते चरणं' चारित्रं, 'इय' एवं 'शिष्याणां भवति परमपदं' मोक्षाख्यम्। 'अभ्यासातिशयात्' अभ्यासातिशयेन तत्रान्यत्र वा जन्मनि कर्मक्षयभावात् इति गाथार्थः ॥ २४ ॥

**एआरिसा इहं खलु अण्णेसिं सासणम्मि अणुरायो। बीअं सवणपवित्ती संताणे तेसु वि जहुत्तं ॥२५॥**

तान् ज्ञानादियुतान् दृष्ट्वा 'ईदृशा' ज्ञानादियुक्ता 'इहं खलु' इहैव जिनशासने इति, 'अन्येषां' गुणपक्षपातिनां 'शासने अनुरागो' भवति, भावत एव शोभनं भव्यमिदं शासनमिति 'बीजं' इत्येतदेव सम्यक्त्वापवर्गबीजं, केषाञ्चित्त्वनुरागातिशयात् 'श्रवणप्रवृत्तिः' अहो शोभनमेतदिति शृण्वन्त्येवापरेऽङ्गीकुर्वन्ति च 'सन्ताने' इत्येवं कुशलसन्तानप्रवृत्तिः 'तेषामपि' अन्येषां सन्तानिनां 'यथोक्तं'–विज्ञानादिगुणलाभतः परमपदमेव। इति गाथार्थः ॥ २५ ॥

**इय कुसलपक्खहेऊ सपरुवयारम्मि निच्चमुज्जुत्तो। सफलीकयगुरुसद्दो साहेइ जहिच्छिअं कज्जं ॥२६॥**

'इय' एवं 'कुशलपक्षहेतुः' पुण्यपक्षकारणं 'स्वपरोपकारे नित्योद्युक्तो' नित्योद्यतः 'सफलीकृतगुरुशब्दो' गुणगुरुत्वेन 'साधयति, यथेप्सितं कार्यं' परमपदम्। इति गाथार्थः ॥ २६ ॥ विपर्ययमाह—

**विहिणाणुवत्तिआ पुण कहिंचि सेवंति जइवि पडिसिद्धं।**
**आणाकारित्ति गुरु न दोसवं होइ सो तहवि ॥ २७ ॥**

'विधिनानुवर्त्तिताः पुनः कथञ्चित्' कर्म्मपरिणामतः 'सेवन्ते यद्यपि प्रतिषिद्धं' सूत्रे 'आज्ञाकारीति गुरुर्न दोषवान् भवत्यसौ तथापि' भगवदाज्ञानुवर्त्तनासम्पादनात् । इति गाथार्थः ॥ २७ ॥

**आहण्णसेवणाए गुरुस्स पावंति नायवज्जमिणं। आणाभंगा उ तयं नय सो अण्णम्मि कह बज्झं ॥२८॥**

'आह' परः—'अन्यसेवनया' अनुवर्त्तितशिष्यापराधसेवनया 'गुरोः पापमिति न्यायबाह्यमिदं', ततश्च स खलु तत्प्रत्ययः सर्व इत्याद्ययुक्तमित्यत्रोत्तरमाह—'आज्ञाभङ्गात् तद्' भगवदाज्ञाभङ्गेन पापं, 'न चासावन्यस्मिन्' किन्तु गुरोरेव 'कथं बाह्यं'? नैव न्यायबाह्यम् । इति गाथार्थः ॥ २८ ॥

**तम्हाणुवत्तियव्वा सेहा गुरुणा उ सो अ गुणजुत्तो । अणुवत्तणासमत्थो जत्तो एआरिसेणेव ॥ २९ ॥**

यस्मादेवं 'तस्मादनुवर्त्तितव्याः शिष्या गुरुणैव स च गुणयुक्तः' सन् 'अनुवर्त्तनासमर्थो, यत् यस्मात्तस्मात्—'ईदृशेनैव' गुरुणा प्रव्रज्या दातव्या । इति गाथार्थः ॥ २९ ॥ अपवादमाह—

**कालपरिहाणिदोसा इत्तो एक्काइगुणविहीणेणं । अन्नेण वि पव्वज्जा दायव्वा सीलवंतेण ॥ ३० ॥**

'कालपरिहाणिदोषात् अतोऽ'—नन्तरोदितगुणगणगणोपेताद् गुरोः 'एकादिगुणविहीनेनान्येनापि प्रव्रज्या दातव्या, शीलवता' शीलयुक्तेन । इति गाथार्थः ॥ ३० ॥ विशेषतः कालोचितं गुरुमाह—

**गीतत्थो कडजोगी चारित्ती तहय गाहणाकुसलो । अणुवत्तगो विसाई बीओ पव्वावणायरिओ ॥ ३१ ॥**

'गीतार्थो' गृहीतसूत्रार्थः 'कृतयोगी' कृतसाधुव्यापारः 'चारित्री' शीलवान् 'तथा च ग्राहणाकुशलः' क्रियाकलापशिक्षणानिपुणः 'अनुवर्त्तकः' स्वभावानुवर्त्तकः स्वभावानुकूल्येन प्रतिजागरकः 'अविषादी' भावापत्सु 'द्वितीयः' अपवादिकः 'प्रव्राजनाचार्यः' प्रव्रज्याप्रयच्छको गुरुः। इति गाथार्थः ॥ २१ ॥ केनेति व्याख्यातम्, अधुना, केभ्य इति व्याख्यायते–केभ्यः प्रव्रज्या दातव्या ? के पुनस्तदर्हाः ? इत्येतदाह—

**पव्वजाए अरिहा आरियदेसम्मि जे समुप्पन्ना। जाइकुलेहिं विसुद्धा तह खीणप्पायकम्ममला ॥२२॥**

'प्रव्रज्याया अर्हा' योग्याः क ? इत्याह–'आर्यदेशे ये समुत्पन्ना' अर्द्धषड्विंशतिजनपदेष्वित्यर्थः १। 'जातिकुलाभ्यां विशिष्टाः,' मातृसमुत्था जातिः, पितृसमुत्थं कुलं २। 'तथा क्षीणप्रायकर्म्ममला' अल्पकर्म्माणः ३। इति गाथार्थः ॥ २२ ॥

**तत्तो अ विमलबुद्धी दुल्लहमणुअत्तणं भवसमुद्दे। जम्मो मरणनिमित्तं चवलाओ संपयाओ अ ॥२३॥**

'ततश्च' कर्म्मक्षयात् 'विमलबुद्धयः ४'। विमलबुद्धित्वादेव च 'दुर्लभं मनुजत्वं भवसमुद्रे' संसारसमुद्रे तथा 'जन्ममरणनिमित्तं चपलाः सम्पदश्च' इति गाथार्थः ॥ २३ ॥

**विसया य दुक्खहेऊ संजोगे निअमओ विओगुत्ति। पइसमयमेव मरणं एत्थ विवागो अ अइरुद्दो ३४**

'विषयाश्च दुःखहेतवः' तथा 'संयोगे' सति 'नियमतो वियोग इति'। 'प्रतिसमयमेव मरणम्' आवीचिमाश्रित्य 'अत्र विपाकश्चातिरौद्रः' परभवे। इति गाथार्थः ॥ २४ ॥

**एवं पयईए च्चिअ अवगयसंसारनिग्गुणसहावा । तत्तो अ तव्विरत्ता पयणुकसायाप्पहासाय ॥३५॥**

'एवं प्रकृत्यैव' स्वभावेनैव 'अवगतसंसारनिर्गुणस्वभावाः' ५ । 'ततश्च' नैर्गुण्यावगमात्' संसारविरक्ताः ६ । 'प्रतनुकषायाः अल्पहास्याश्च' ७-८ । हास्यग्रहणं रत्याद्युपलक्षणम् । इति गाथार्थः ॥ ३५ ॥

**सुकयण्णुआ विणीआ रायाईणमविरुद्धकारी य । कल्लाणंगा सद्धा थिरा तहा समुवसंपण्णा ॥ ३६ ॥**

'सुकृतज्ञा ९ विनीताः १० राजादीनामविरुद्धकारिणश्च' ११ । आदिशब्दाद् अमात्यादिपरिग्रहः (१२) 'कल्याणाङ्गाः १३ श्राद्धाः १४ स्थिराः १५ । तथा समुपसम्पन्नाः' १६ इति गाथार्थः ॥३६॥ उत्सर्गत एवंभूता एव, अपवादतस्त्वाह—

**कालपरिहाणिदोसा एत्तो एक्कादिगुणविहीणावि । जे बहुगुणसंपन्ना ते जुग्गा हुंति नायव्वा ॥ ३७॥**

'कालपरिहाणिदोषात् अतो-'ऽनन्तरादिगुणगणान्वितेभ्यः, एकादिगुणविहीना अपि ये बहुगुणसम्पन्नास्ते योग्या भवन्ति ज्ञातव्याः, प्रव्रज्यायाः । इति गाथार्थः ॥ ३७ ॥

**नउ मणुअमाइएहिं धम्मेहिं जुएत्ति एत्तिएणेव । पायं गुणसंपन्ना गुणपगरिससाहगा जेणं ॥ ३८॥**

'नतु मनुजादिभिर्धर्मैर्युक्ता इत्येतावतैव' योग्या इति आदिशब्दादार्यदेशोत्पन्नग्रहः, किमेतदित्थम् ? इत्यत्राह— 'प्रायो' बाहुल्येन 'गुणसम्पन्नाः' सन्तः 'गुणप्रकर्षसाधका येन', गुणप्रकर्षश्च प्रव्रजितेन साधनीयः । इति गाथार्थः ॥३८॥ निगमयन्नाह—

एवंविहाण देया पवज्जा भवविरत्तचित्ताणं। अच्चंतदुक्करा जं थिरं च आलंबणमिमेसिं ॥ ३९ ॥

'एवंविधेभ्यो'—बहुगुणसम्पन्नेभ्यो 'देया' दातव्या 'प्रव्रज्या' दीक्षा 'भवविरक्तचित्तेभ्यः'—संसारविरक्तचित्तेभ्यः, किमित्यत्राह—'अत्यन्तदुष्करा यत्' यस्मात् 'स्थिरं चालम्बनममीषां' भवविरक्तचित्तानाममी सदा वैराग्यभावेन कुर्वन्ति। इति गाथार्थः ॥ ३९ ॥ दुष्करत्वनिबन्धनमाह—

अइगुरुओ मोहतरू अणाइभवभावणाविअयमूलो। दुक्खं उम्मूलिज्जइ अच्चंतं अप्पमत्तेहिं ॥ ४० ॥

'अतिगुरुः' अतिरौद्रः 'मोहतरुः' मोहस्तरुरिवाशुभपुष्पफलदानभावेन मोहतरुः 'अनादिभवभावनाविततमूलः'—अनादिमत्यो याः संसारभावना विषयस्पृहाद्यास्ताभिर्व्याप्तमूलः, यतश्चैवमतो 'दुःखमुन्मूल्यते' अपनीयते 'अत्यन्तमप्रमत्तैः'। इति गाथार्थः ॥ ४० ॥

संसारविरत्ताण य होइ तओ न उण तयभिनंदीणं। जिणवयणंपि न पायं तेसिं गुणसाहगं होइ ॥ ४१ ॥

'संसारविरक्तानां च भवति तक' इत्यसावप्रमादः, 'न पुनः तदभिनन्दिनां,' जिनवचनाद् भविष्यतीति चेत्; एतदाशङ्क्याह—'जिनवचनमपि' आस्तां! तावदन्यत् 'न प्रायस्तेषां' संसाराभिनन्दिनां 'गुणसाधकं भवति,' शुभनिर्वर्त्तकं भवति। इति गाथार्थः ॥ ४१ ॥ किमित्यत आह—

गुरुकम्माणं जम्हा किलिट्ठचित्ताण तस्स भावत्थो। नो परिणमेइ सम्मं कुंकुमरागोव्व मलिणम्मि ४२

'गुरुकर्म्मणां' प्रचुरकर्म्मणां 'यस्मात् क्लिष्टचित्तानां' मलिनचित्तानां 'तस्य' जिनवचनस्य 'भावार्थोऽविपरीतार्थो 'न परिणमति' न प्रतिभासते 'सम्यग्' अविपरीतः, दृष्टान्तमाह–'कुङ्कुमराग इव मलिने' वाससीति गम्यते, न चापरिणतोऽसावप्रमादप्रसाधकः। इति गाथार्थः ॥ ४२ ॥ किञ्च—

**विट्ठाण सूअरो जह उवएसेण वि न तीरए धरिउं। संसारसूअरो इअ अविरत्तमणो अकज्जम्मि॥४३॥**

'विष्ठायां' पुरीषलक्षणायां 'शूकरः' पशुविशेषः 'यथा उपदेशेनापि' निवारणालक्षणेन, अपिशब्दात् प्रायः क्रिययापि 'न शक्यते धर्तुं', किन्तु बलात्प्रवर्त्तते, एवं 'संसारशूकरः' प्राणी इति एवम् 'अविरक्तमनाः' संसार एवेति गम्यते 'अकार्य' इत्यनासेवनीये न शक्यते धर्तुम्। इति गाथार्थः ॥ ४३ ॥

**ता धन्नाणं गीओ उवाहिसुद्धाण देइ पवज्जं। आयपरपरिच्चाओ विवज्जए मा हविज्जत्ति ॥ ४४ ॥**

यस्मादेवं 'तस्माद्धन्येभ्यः' पुण्यभाग्भ्यो 'गीत' इति गीतार्थः, 'उपाधिशुद्धेभ्यः' आर्यदेशसमुत्पन्नादिविशेषणशुद्धेभ्यो 'ददाति प्रव्रज्यां' प्रयच्छति दीक्षाम्, 'आत्मपरपरित्यागो विपर्यये माभूदिति'; तथाहि–अधन्येभ्योऽनुपाधिशुद्धेभ्यः प्रव्रज्यादाने आत्मपरपरित्यागो नियमत एव। इति गाथार्थः ॥ ४४ ॥ एतदेव भावयति—

**अविणीओ नय सिक्खइ सिक्खं पडिसिद्धसेवणं कुणइ।**
**सिक्खावणेण तस्स हु सइ अप्पा होइ परिचत्तो ॥ ४५ ॥**

'अविनीत' इति सह्यधन्यः प्रव्रजितः प्रकृत्यैवाविनीतो भवति, 'न च शिक्षति शिक्षां' ग्रहणासेवनारूपां, 'प्रतिषिद्धसेवनं करोति' अविहितानुष्ठाने च प्रवर्तते प्रतीतशिक्षणेन 'तस्य इत्थंभूतस्य 'सदा सर्वकालम् आत्मा भवति, परित्यक्तः' अविषयप्रवृत्तेः । इति गाथार्थः ॥ ४५ ॥

**तस्स वि य अट्टज्झाणं सद्धाभावम्मि उभयलोगेहिं । जीविअमहलं किरियाणाएणं तस्स चाओत्ति ४६**

'तस्यापिच' अधन्यस्याशिक्षायां प्रवर्त्तमानस्य 'आर्त्तध्यानम्' इत्यार्त्तध्यानं भवति । किमित्यत आह 'श्रद्धाभावे' सति श्राद्धस्य हि तथाप्रवर्त्तमानस्य सुखं, नेतरस्य, ततश्च 'उभयलोकयोः' इह लोके परलोके च 'जीवितमफलं' तस्य इह लोके तावद्भिक्षाटनादियोगात्, परलोके च कर्म्मबन्धात्, 'क्रियाज्ञातेन' इति वैद्यक्रियोदाहरणेन 'तस्य त्याग इति' अनेन प्रकारेण परपरित्यागः । इति गाथार्थः ॥ ४६ ॥ क्रियाज्ञातमाह—

**जह लोअम्मि वि विज्जो असज्जवाहीण कुणइ जो किरियं । सो अप्पाणं तह वाहिएअ पाडेइ केसम्मि ४७**

'यथा लोकेऽपि वैद्य असाध्यव्याधीनाम्' आतुराणां 'करोति यः क्रियां, स आत्मानं तथा व्याधितांश्च पातयति क्लेशे', व्याध्यपगमाभावात् इति गाथार्थः ॥ ४७ ॥

**तह चेव धम्मविज्जो एत्थ असज्झाण जो उ पव्वज्जं । भावकिरिअं पउंजइ तस्सवि उवमा इमा चेव ४८**

'तथैव धर्म्मवैद्य' आचार्यः 'अत्र' अधिकारे 'असाध्यानां' कर्म्मव्याधिमाश्रित्य 'यस्तु प्रव्रज्यां भावक्रियां प्रयुङ्क्ते',

कर्म्मरोगनाशनाय 'तस्यापि' धर्म्मवैद्यस्य 'उपमा' इयमेव, आत्मानं तांश्च क्लेशे पातयति । इति गाथार्थः ॥ ४८ ॥
चोदक आह–जिनक्रियाया असाध्या नाम न सन्ति; सत्यमित्याह–

**जिणकिरिआए असज्झा ण इत्थ लोगम्मि केइ विज्जंति। जे तप्पओगजोगा तेसज्झा एस परमत्थो ४९**

जिनानां सम्बन्धिनी क्रिया तत्प्रणेतृत्वेन 'जिनक्रिया' तस्या 'असाध्या' अचिकित्स्याः 'नात्र लोके' प्राणिलोके 'केचन' प्राणिनो 'विद्यन्ते' । किन्तु 'ये तत्प्रयोगायोग्या' जिनक्रियायामनुचिताः 'तेऽसाध्याः', कर्म्मव्याधिमाश्रित्य 'एष परमार्थः', इदमत्र हृदयम् । इति गाथार्थः ॥ ४९ ॥

**एएसि वयपमाणं अट्ठसमाउत्ति वीअरागेहिं । भणियं जहन्नयं खलु उक्कोसं अणवगल्लोत्ति ॥ ५० ॥**

'एतेषां' प्रव्रज्यायोग्यानां 'वयःप्रमाणं' शरीरावस्थाप्रमाणम् 'अष्टौ समा इति' अष्टवर्षाणि 'वीतरागैः' जिनैः 'भणितं' प्रतिपादितं, 'जघन्यकं खलु' सर्वस्तोकमेतदेव द्रव्यलिङ्गप्रतिपत्तेरिति, 'उत्कृष्टं' वयःप्रमाणं 'अनवगल्ल इति' अनत्यन्तवृद्धः । इति गाथार्थः ॥ ५० ॥ अधः को दोष ? इति चेत्; उच्यते–

**तदहो परिभवखित्तं ण चरणभावो वि पायमेएसिं । आहच्चभावकहगं सुत्तं पुण होइ नायव्वं ॥ ५१ ॥**

'तदधः परिभवक्षेत्रम्' इत्यष्टभ्यो वर्षेभ्य आरादसौ परिभवभाजनं भवति 'न चरणपरिणामो(भावो)ऽपि' न चारित्रपरिणामोऽपि 'प्रायो' बाहुल्येन 'एतेषां' तदधोवर्तिनां बालानामिति; आह–एवंसति सूत्रविरोधः, "छम्मासियं छसु

इत्यादि श्रवणान्नैव चरणपरिणाममन्तरेण भावतः षट्सु यतो भवतीति । अत्रोत्तरमाह—'आहत्यभावकथकं' कादा-

जयं" इत्यादि श्रवणान्नैव चरणपरिणाममन्तरेण भावतः षट्सु यतो भवतीति । अत्रोत्तरमाह—'आहत्यभावकथकं' कादा-
चित्कभावसूचकं 'सूत्रं पुनः' षाण्मासिकम् इत्यादि 'भवति ज्ञातव्यम्' तच्च प्रायोग्रहणेन व्युदस्तमेव, न सूत्रविरोधः ।
इति गाथार्थः ॥ ५१ ॥ पराभिप्रायमाह—

**केइ भणंति बाला किल एए वयजुआ वि जे भणिया । खुड्डगभावाउ च्चिय न हुंति चरणस्स जुग्गुत्ति ५२**

'केचन भणंति' तन्त्रान्तरीयास्त्रैवेद्यवृद्धादयो 'बालाः किल एते' के इत्याह 'वयोयुक्ता अपि ये भणिता' अष्टवर्षा अपि ये उक्ताः, यतश्चैवमतः 'क्षुल्लकभावादेव' बालत्वादेव किमित्याह—न सम्भवन्ति 'चरणस्य योग्या' इति न चारित्रो-
चिताः । इति गाथार्थः ॥ ५२ ॥

**अन्ने उ भुत्तभोगाणमेव पव्वज्जमणहमिच्छंति । संभावणिज्जदोसा वयम्मि जं खुड्डगा होंति ॥ ५३ ॥**

'अन्ये तु' त्रैवेद्यवृद्धाः 'भुक्तभोगानामेव' अतीतयौवनानां 'प्रव्रज्यामनवद्यां' अपापां इच्छन्ति प्रतिपद्यन्ते, किमि-
त्यत्राह—'सम्भावनीयदोषाः' सम्भाव्यमानविषयासेवनापराधा 'वयसि' यौवने 'यद्' यस्मात् 'क्षुल्लका भवन्ति', सम्भवी
च दोषः परिहर्त्तव्यो यतिभिः । इति गाथार्थः ॥ ५३ ॥

**विण्णायविसयसंगा सुहं च किल ते तओणुपालंति । कोउअनिअत्तभावा पव्वज्जमसंकणिज्जाय ॥५४॥**

'विज्ञातविषयसङ्गाः—' अनुभूतविषयसङ्गाः सन्तः 'सुखं च किल ते' अतीतवयसः, 'ततो' विज्ञातविषयसङ्गत्वात्

कारणात् 'अनुपालयन्ति' 'प्रव्रज्याम्' इति योगः, कस्माद्धेतोरित्यत्राह–'कौतुकनिवृत्तभावा' इति कृत्वा' 'निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनम्' इति वचनात् विषयालम्बनकौतुकनिवृत्तभावत्वादित्यर्थः, गुणान्तरमाह–'अशङ्कनीयाश्च' इति अतिक्रान्तवयसः सर्वप्रयोजनेष्वेवाशङ्कनीयाश्च भवन्ति इति गाथार्थः ॥ ५४ ॥ किञ्च–

**धम्मत्थकाममोक्खा पुरिसत्था जं चयारिलोगम्मि। एए अ सेविअवा निअ २ कालम्मि सवे वि ॥५५॥**

'धर्म्मार्थकाममोक्षाः पुरुषार्थाः यद्' यस्मात् 'चत्वारो लोके' तत्राहिंसादिलक्षणो धर्म्मः, हिरण्यादिरर्थः, इच्छामदनलक्षणः कामः, अनाबाधो मोक्षः, 'एते' चत्वारः पुरुषार्थाः 'सेवितव्याः'। 'निजनिजकाले' आत्मीयात्मीयकाले 'सर्वेऽपि,' अन्यथा अक्षीणकामनिबन्धनकर्म्मणस्तत्परित्यागे दोषोपपत्तेः इति गाथार्थः ॥ ५५ ॥ गुणान्तरमाह–

**तहऽभुत्तभोगदोसा कोउगकामग्गहपत्थणाईआ। एएवि होंति विजढा जोग्गाहिगयाण तो दिक्खा ५६**

'तथा अभुक्तभोगदोषा' इति न भुक्ता भोगा यैस्ते अभुक्तभोगास्तद्दोषाः 'कौतुककामग्रहप्रार्थनादयः', तत्र कौतुकं–सुरतविषयमौत्सुक्यं, कामग्रहः–तदनासेवनोद्रेकाद्विभ्रमः, प्रार्थना–योषिदभ्यर्थना आदिशब्दाद्धलाग्रहणादिपरिग्रहः, 'एतेऽपि भवन्ति विजढाः' परित्यक्ता अतिक्रान्तवयोभिः प्रव्रज्यां प्रतिपद्यमानैरिति 'योग्याधिकृतानाम्' अतिक्रान्तवयसामेव 'तत्' तस्मात्–'दीक्षा' प्रव्रज्या इतरे त्वयोग्या एवोक्तदोषोपपत्तेः इति गाथार्थः ॥५६॥ एषः पूर्वपक्षः, अत्रोत्तरमाह–

**भण्णइ खुड्डगभावो कम्मखओवसमभावपभवेणं। चरणेण किं विरुज्झइ ? जेणमजोग्गत्ति सग्गाहो ५७**

'भण्यते'ऽत्र प्रतिवचनं–'क्षुल्लकभावो'–बालभावः, 'कर्म्मक्षयोपशमभावप्रभवेन' कर्म्मक्षयोपशमभावात् प्रभव–उत्पादो यस्य तेनेत्थम्भूतेन 'चरणेन' सहार्थे तृतीयेति सह 'किं विरुध्यते ? येनायोग्याः' क्षुल्लका 'इत्यसद्ग्राहः,' न विरुद्ध्यते । इति गाथार्थः ॥ ५७ ॥ एतदेव स्पष्टयन्नाह–

**तक्कम्मखओवसमो चित्तनिबंधणसमुब्भवो भणिओ। न उ वयनिबंधणोच्चिय तह्मा एआणमविरोहो ५८**

'तत्कर्म्मक्षयोपशमः' चारित्रमोहनीयकर्म्मक्षयोपशमः 'चित्रनिबन्धनसमुद्भवो' नानाप्रकारकारणादुत्पादो यस्य स तथाविधो 'भणितः,' उक्तोऽर्हदादिभिः 'नतु वयोनिबन्धन एव' न विशिष्टशरीरावस्थाकारण एष, यस्मादेवं 'तस्मादेतयोः वयश्चरणपरिणामयोः 'अविरोधो'ऽबाधा इति गाथार्थः ॥ ५८ ॥ इत्थं चैतदङ्गीकर्त्तव्यमिति दर्शयति–

**गयजोव्वणा वि पुरिसा बालुव्व समायरंति कम्माणि। दोग्गइ निबंधणाइं जोव्वणवंता वि णय केइ ॥ ५९ ॥**

'गतयौवना' अतिक्रान्तवयसोऽपि 'पुरुषाः बाला इव' यौवनोन्मत्ता इव 'समाचरन्ति'–आसेवन्ते कर्म्माणि क्रियारूपाणि, किंविशिष्टानि? इत्याह–'दुर्गतिनिबन्धनानि'–कुगतिकारणानि 'यौवनवन्तोऽपि'–यौवनसमन्विता अपि 'न च केचन' समाचरन्ति, तथाविधानि कर्म्माणि ततो व्यभिचारियौवनम् इति गाथार्थः ॥ ५९ ॥ ततश्च–

**जोव्वणमविवेगो च्चिअ विन्नेओ भावओ उ तयभावो ।**
**जोव्वणविगमो सो उण जिणेहिं न कया वि पडिसिद्धो ॥ ६० ॥**

'यौवनमविवेक एव विज्ञेयः, भावतस्तु' परमार्थत एव 'तदभाव' अविवेकाभावो 'यौवनविगमः,' स पुनः अविवेका भावो 'जिनैर्न कदाचित् प्रतिषिद्धः' सदैव सम्भवात् इति गाथार्थः ॥ ६० ॥ अत्राह–

जइ एवं तो कम्हा वयम्मि निअमो कओ उ नणु भणियं ।
तदहो परिहवखित्ताइ कारणं बहुविहं पुव्वं ॥ ६१ ॥

'यद्येवं' यौवनं व्यभिचारि,'ततः कस्माद्वयसि नियमः कृत एव' ? अष्टौ समा इत्येवंभूतः; अत्रोत्तरमाह–'ननु भणितम्' अत्र 'तदधः परिभवक्षेत्रादिकारणं बहुविधम्' अनेकप्रकारं 'पूर्वम्' इति गाथार्थः ॥६१॥ पूर्वपक्षमुल्लिङ्ग्य व्यभिचारयन्नाह–

संभावणिज्जदोसा वयम्मि खुड्डुत्ति जं पि तं भणिअं ।
तंपि न अणहं जम्हा सुभुत्तभोगाण वि समं तं ॥ ६२ ॥

'सम्भावनीयदोषा वयसि क्षुल्लका इति यद् भणितं' पूर्वं 'तदपि तद्भणितमपि' नानघं "न शोभनं, कुत ? इत्याह–'यस्मात् सुभुक्तभोगानामपि' अतीतवयसां ऋषिश्रृङ्गपितृप्रभृतीनां 'समं' तुल्यं 'तत्' सम्भावनीयदोषत्वमिति गाथार्थः ॥६२॥ किञ्च–

कम्माण रायभूअं वेअंतं जाव मोहणिज्जं तु । संभावणिज्जदोसा चिट्ठइ ता चरमदेहा वि ॥ ६३ ॥

'कर्म्मणां राजभूतं' अशुभतया प्रधानमित्यर्थः, ओघत एव मिथ्यात्वादेरारभ्य 'वेदान्तं यावन्मोहनीयं तु तिष्ठति

योगः' तुर्विशेषणार्थः, किं विशिनष्टि ?–स्वप्रक्रियामाश्रित्यैवं, तन्त्रान्तरं त्वाश्रित्य भवाभिनन्दिनी अविद्या परिगृह्यते, सम्भावनीयदोषाः तावत् चरमदेहा अपि–पश्चिमशरीरा अपि, तिष्ठन्तु तावदन्य इति गाथार्थः ॥ ६३ ॥ यतश्चैवम्—

**तम्हा न दिक्खिअव्वा केइ अणिअट्टिबायरादारा। ते न य दिक्खाविअला पायं जं विसममेअंति ॥ ६४ ॥**

यस्मादेवं तस्मान्न दीक्षितव्या–न प्रव्राजनीयाः केचिद् अनिवृत्तिबादरेभ्य आरात्–क्षपकश्रेणिप्रक्रमे यावदनिवृत्तिबादरा न संजातास्तावन्न दीक्षितव्या इति स्वप्रक्रियानुसारेण, तन्त्रान्तरपरिभाषया त्वानन्दशक्त्यनुबोधेनावाप्ताणिमादिभावेभ्य आरादिति, ते च–अनिवृत्तिबादराः अवाप्ताणिमादिभावा वा न दीक्षाविकलाः–न' प्रव्रज्याशून्याः प्रायः तत्रान्यत्र वा जन्मनि द्रव्यदीक्षामप्याश्रित्य, मरुदेवीकल्पाश्चर्यभावव्यवच्छेदार्थं प्रायोग्रहणम्, एतच्च तन्त्रान्तरेऽपि स्वपरिभाषया गीयत एव 'अत्यन्तमनवाप्तकल्याणोऽपि कल्याणं प्राप्त' इति वचनात्, यद्–यस्मादेवं विषममेतत् ततः–तस्माद् विषमं-सङ्कटमेतत्, किमुक्तं भवति ?–दीक्षाव्यतिरेकेण विशिष्टगुणा न भवन्ति तद्व्यतिरेकेण च न दीक्षेतीतरेतराश्रयविरोधः इति गाथार्थः ॥ ६४ ॥ अन्यदुच्चार्य समतां दर्शयन्नाह—

**विण्णायविसयसंगा जमुत्तमिच्चाइ तंपि णणु तुल्लं। अण्णायविसयसंगावि तग्गुणा केइ जं हुंति ॥ ६५ ॥**

विज्ञातविषयसङ्गा यदुक्तमित्यादि पूर्वपक्षवादिना तदपि ननु तुल्यं मत्पक्षेऽपि, कथमित्याह—अज्ञातविषयसङ्गा अपि तद्गुणाः–विज्ञातविषयसङ्गगुणाः केचन प्राणिनो यद्–यस्माद् भवन्ति इति गाथार्थः ॥ ६५ ॥ स्वपक्षोपचयमाह—

अभुक्तभोगानां दीक्षा गा. ६४-६५

'यौवनमविवेक एव विज्ञेयः, भावतस्तु' परमार्थत एव 'तदभाव' अविवेकाभावो 'यौवनविगमः,' स पुनः अविवेका भावो 'जिनैर्न कदाचित् प्रतिषिद्धः' सदैव सम्भवात् इति गाथार्थः ॥ ६० ॥ अत्राह–

जइ एवं तो कम्हा वयम्मि निअमो कओ उ नणु भणियं ।
तदहो परिहवखित्ताइ कारणं बहुविहं पुव्वं ॥ ६१ ॥

'यद्येवं 'यौवनं व्यभिचारि,'ततः कस्माद्वयसि नियमः कृत एव' ? अष्टौ समा इत्येवंभूतः; अत्रोत्तरमाह–'ननु भणितम्' अत्र 'तदधः परिभवक्षेत्रादिकारणं बहुविधम्' अनेकप्रकारं 'पूर्वम्' इति गाथार्थः ॥६१॥ पूर्वपक्षमुल्लिङ्घ्य व्यभिचारयन्नाह–

संभावणिज्जदोसा वयम्मि खुड्डुत्ति जं पि तं भणिअं ।
तंपि न अणहं जम्हा सुभुत्तभोगाण वि समं तं ॥ ६२ ॥

'सम्भावनीयदोषा वयसि क्षुल्लका इति यद् भणितं' पूर्वं 'तदपि तद्भणितमपि' नानघं "न शोभनं, कुत ? इत्याह–'यस्मात् सुभुक्तभोगानामपि' अतीतवयसां ऋषिश्रृङ्गपितृप्रभृतीनां 'समं' तुल्यं 'तत्' सम्भावनीयदोषत्वमिति गाथार्थः ॥६२॥ किञ्च–

कम्माण रायभूअं वेअंतं जाव मोहणिज्जं तु । संभावणिज्जदोसा चिट्ठइ ता चरमदेहा वि ॥ ६३ ॥

'कर्म्मणां राजभूतं' अशुभतया प्रधानमित्यर्थः, ओघत एव मिथ्यात्वादेरारभ्य 'वेदान्तं यावन्मोहनीयं तु तिष्ठति

इंगिणिमरणविहाणं आपवज्जं तु विअडणं दाउं । संलेहणं च काउं जहासमाही जहाकालं ॥ १६२३ ॥
पच्चक्खइ आहारं चउविहं णियमओ गुरुसमीवे । इंगिअदेसम्मि तहा चिट्ठंपि हु इंगिअं कुणइ ॥ १६२४ ॥
उव्वत्तइ परिअत्तइ काइअमाईसु होइ उ विभासा । किच्चंपि अप्पणच्चिअ जुंजइ नियमेण धिइबलिओ ॥ १६२५ ॥
भत्तपरिण्णाएवि हु आपवज्जं तु विअडणं देइ । पुव्विं सीअलगोवि हु पच्छा संजायसंवेगो ॥ १६२६ ॥
वज्जइ अ संकिलिट्ठं विसेसओ णवर भावणं एसो । उल्लसिअजीववीरिओ तओ अ आराहणं लहइ १६२७
कंदप्पदेवकिब्बिस अभिओगा आसुरा य सम्मोहा। एसा उ संकिलिट्ठा पंचविहा भावना भणिआ १६२८
जो संजओऽवि एआसु अप्पसत्थासु वट्टइ कहंचि। सो तव्विहेसु गच्छइ सुरेसु भइओ चरणहीणो ॥१६२९॥
कंदप्पे कुक्कुइए दवसीले आवि हासणपरे अ। विम्हावितो अ परं कंदप्पं भावणं कुणइ ॥१६३०॥ पडिदारगाहा॥
कहकहकहस्सहसणं कंदप्पो अणिहुआ य संलावा । कंदप्पकहाकहणं कंदप्पुवएस संसा य ॥१६३१॥ दारं ॥

भमुहणयणाइएहिं वयणेहि अ तेहिं तेहिं तह चिट्ठं ।
कुणइ जह कुक्कुअं चिअ हसइ परो अप्पणा अहसं ॥ १६३२ ॥ दारं ॥

भासइ दुअं दुअं गच्छई अ दपिअव्व गोविसो सरए । सव्वदवद्दवकारी फुट्टइव ठिओवि दप्पेणं ॥ १६३३ ॥ दा.
वेसवयणेहि हासं जणयंतो अप्पणो परेसिं च । अह हासणोत्ति भण्णइ घयणोव्व छले णिअच्छंतो॥१६३४॥दा.
सुरजालमाइएहिं तु विम्हयं कुणइ तव्विहजणस्स । तेसु ण विम्हयइ सयं आहट्टकुहेडएसुं च ॥ १६३५ ॥दारं॥

नाणस्स केवलीणं धम्मायरिआण सव्वसाहूणं। भासं अवण्ण माई किंविसियं भावणं कुणइ ॥१६३६॥ पडि.
काया वया य ते चिअ ते चेव पमाय अप्पमाया य । मोक्खाहिआरिआणं जोइसजोणीहिं किं कज्जं ?॥१६३७॥दारं
सव्वेऽवि ण पडिबोहेइ ण याविसेसेण देइ उवएसं। पडितप्पइ ण गुरूणवि णाओ अइणिट्ठिअट्ठो उ ॥१६३८॥दा०
जच्चाईहिं अवण्णं विहसइ वट्टइ णयावि उववाए। अहिओ छिद्दप्पेही पगासवाई अणणुलोमो ॥ १६३९ ॥ दारं ॥

अविसहणा तुरियगई अणाणुवित्ती अ अवि गुरूणंपि ।
खणमित्तपीइरोसा गिहिवच्छलगा य संचइआ ॥ १६४० ॥ दारं ॥

गूहइ आयसहावं छायइ अ गुणे परस्स संतेऽवि । चोरो व सव्वसंकी गूढायारो हवइ मायी ॥ १६४१ ॥ दारं ॥

कोउअ भूईकम्मे पसिणा इअरे णिमित्तमाजीवी ।
इड्ढिरससायगुरुओ अभिओगं भावणं कुणइ ॥ १६४२ ॥ पडिदारं ॥

विम्हवणहोमसिरपरिरयाइ खारडहणाणि धूमे अ । असरिसवेसग्गहणा अवयासण थंभणं बंधं ॥१६४३॥ दारं॥
भूईअ मट्टिआए सुत्तेण व होइ भूइकम्मं तु । वसहीसरीरभंडगरक्खा अभिओगमाईआ ॥ १६४४ ॥ दारं ॥

पण्हो उ होइ पसिणं जं पासइ वा सयं तु तं पसिणं ।
अंगुट्ठुच्छिट्ठपए दप्पणे अ असितोअकुड्डाई ( कुड्डाई ॥ पा. ) ॥ १६४५ ॥ दारं ॥

पसिणापसिणं सुमिणे विज्जासिट्ठं कहेइ अण्णस्स । अहवा आइंखणिआ घंटिअसिट्ठं परिकहेइ ॥१६४६॥ दारं ॥

तिविहं होइ णिमित्तं तीएँ पडुप्पण्ण णागयं चेव। एत्थ सुभासुभभेअं अहिगरणेतर विभासाए ॥ १६४७ ॥
एयाणि गारवट्ठा कुणमाणो आभिओगिअं बंधे। बीअं गारवरहिओ कुव्वइ आराह उच्चं च ॥ १६४८ ॥ दारं ॥
अणुबद्धवुग्गहोच्चिअ संतत्ततवो णिमित्तमाएसी। णिक्किव निराणुकंपो आसुरिअं भावणं कुणइ ॥ १६४९ ॥
णिच्चं विग्गहसीलो काऊण य णाणुतप्पई पच्छा। ण य खामिओ पसीअइ अवराहीणं दुविण्हंपि ॥१६५०॥ दारं॥
आहारउवहिसिज्जासु जस्स भावो उ निच्चसंसत्तो। भावोवहओ कुणइ अ तवोवहाणं तयट्ठाए ॥ १६५१ ॥
तिविहं हवइ निमित्तं एक्किक्कं छव्विहं तु विण्णेअं। अभिमाणाभिनिवेसा वागरिअं आसुरं कुणइ ॥१६५२॥ दारं॥
चंकमणाईसत्तो सुणिक्किवो थावराइसत्तेसुं। काउं व णाणुतप्पइ एरिसओ णिक्किवो होइ ॥ १६५३ ॥ दारं ॥
जो उ परं कंपंतं दट्ठूण ण कंपए कढिणभावो। एसो उ णिरणुकंपो पण्णत्तो वीअरागेहिं ॥ १६५४ ॥ दारं ॥
उम्मग्गदेसओ मग्गदूसओ मग्गविप्पडीवत्ती। मोहेण य मोहित्ता सम्मोहं भावणं कुणइ ॥१६५५॥ पडिदार ॥
नाणाइ अ दूसिंतो तव्विवरीअं तु उद्दिसइ मग्गं। उम्मग्गदेसओ एस होइ अहिओ अ सपरेसिं ॥ १६५६ ॥
णाणाइ तिविहमग्गं दूसइ जो जे अ मग्गपडिवण्णे। अबुहो जाईए खलु भण्णइ सो मग्गदूसोत्ति॥१६५७॥दारं॥
जो पुण तमेव मग्गं दूसिउं पंडिओ सतक्काए। उम्मग्गं पडिवज्जइ विप्पडिवन्नेस मग्गस्स ॥ १६५८ ॥ दारं ॥
तह २ उवहयमइओ मुज्झइ णाणचरणंतरालेसुं। इड्ढीओ अ बहुविहा दट्ठुं जत्तो तओ मोहो ॥ १६५९ ॥
जो पुण मोहेइ परं सब्भावेणं च कइअवेणं वा। समयंतरम्मि सो पुण मोहित्ता घेप्पइ सऽणेणं ॥ १६६० ॥

एयाओ भावणाओ भावित्ता देवदुग्गइं जंति । तत्तोऽवि चुआ संता प ( रिं ) ति भवसागरमणंतं ॥ १६६१ ॥
एयाओ विसेसेणं परिहरई चरणविग्घभूआओ । एअनिरोहाओ च्चिअ सम्मं चरणंपि पावेइ ॥ १६६२ ॥
आह ण चरणविरुद्धा एआओ एत्थ चेव जं भणिअं । जो संजओऽवि भइओ चरणविहीणो अ इच्चाई ॥ १६६३ ॥
ववहारणया चरणं एआसुं जं असंकिलिट्ठोऽवि । कोई कंदप्पाई सेवइ ण उ णिच्छयणएणं ॥ १६६४ ॥
अकुलंडं गुणठाणं इट्ठं एअस्स णियमओ चेव । सइ उचियपवित्तीए सुत्तेऽवि जओ इमं भणियं ॥ १६६५ ॥
जो जहवायं न कुणइ मिच्छद्दिट्ठी तओ हु को अण्णो ?। वड्ढेइ अ मिच्छत्तं परस्स संकं जणेमाणो ॥ १६६६ ॥
कंदप्पाइवाओ न चेह चरणम्मि सुवइ कहंचि ( हिंवि ) । ता एअसेवणंपि हु तवायविराहगं चेव ॥ १६६७ ॥
किंतु असंखिज्जाइं संजमठाणाइं जेण चरणेऽवि । भणियाइं जाइभेया तेण न दोसो इहं कोइ ॥ १६६८ ॥
एआण विसेसेणं तच्चाओ तेण होइ कायव्वो । पुव्विं तु भाविआणवि पच्छायावाइजोएणं ॥ १६६९ ॥
कयमित्थ पसंगेणं पगयं वोच्छामि सव्वनयसुद्धं । भत्तपरिण्णाए खलु विहाणसेसं समासेणं ॥ १६७० ॥
वियडण अब्भुट्ठाणं उचिअं संलेहणं च काऊणं । पच्चक्खइ आहारं तिविहं च चउव्विहं वावि ॥ १६७१ ॥
उववसइ परिअत्तइ सयमण्णेणावि कारवइ किंचि । जत्थ समत्थो नवरं समाहिजणगं अपडिबद्धो ॥ १६७२ ॥
मेसावी सत्ताइसु जिणिंदवयणेण तह य अन्नत्थं । भावेइ तिव्वभावो परमं संवेगमावण्णो ॥ १६७३ ॥
सुहझाणाओ धम्मो तं देहसमाहिसंभवं पायं । ता धम्मापीडाए देहसमाहिम्मि जइअव्वं ॥ १६७४ ॥

इहरा छेवट्ठम्मी संघयणे थिरधिईएँ रहिअस्स । देहस्सऽसमाहीए कत्तो सुहझाणभावोत्ति ? ॥ १६७५ ॥
तयभावम्मि अ असुहा जायइ लेसावि तस्स णियमेणं । तत्तो अ परभवम्मि अ तल्लेसेसुं तु उववाओ ॥ १६७६ ॥
तम्हा उ सुहं झाणं पच्चक्खाणिस्स सव्वजत्तेणं । संपाडेअव्वं खलु गीअत्थेणं सुआणाए ॥ १६७७ ॥
सो चिअ अप्पडिबद्धो दुल्लहलंभस्स विरइभावस्स । अप्परिवडणत्थं चिअ तं तं चिट्ठं करावेइ ॥ १६७८ ॥
तहवि तया अद्दीणो जिणवरवयणंमि जायबहुमाणो ।
संसाराओँ विरत्तो जिणेहिं आराहओ भणिओ ॥ १६७९ ॥
जं सो सयावि पायं मणेण संविग्गपक्खिओ चेव । इअरो उ विरइरयणं न लहइ चरमेऽवि कालम्मि ॥ १६८० ॥
संविग्गपक्खिओ पुण अण्णत्थ पयट्टिओऽवि काएणं । धम्मे चिअ तल्लिच्छो दढरतित्थिव पुरिसम्मि ॥ १६८१ ॥
तत्तो चिअ भावाओ णिमित्तभूअंमि चरमकालम्मि । उक्करिसविसेसेणं कोई विरइंपि पावेइ ॥ १६८२ ॥
जो पुण किलिट्ठचित्तो णिरविक्खोऽणत्थदंडपडिबद्धो । लिंगोवघायकारी ण लहइ सो चरमकालेऽवि ॥ १६८३ ॥
चोएइ कहं समणो किलिट्ठचित्ताइदोसवं होइ । गुरुकम्मपरिणईओ पायं तह दव्वसमणो अ ॥ १६८४ ॥
गुरुकम्मओ पमाओ सो खलु पावो जओ तओऽणेगे । चोद्दसपुव्वधरावि हु अणंतकाए परिवसंति ॥ १६८५ ॥
दुक्खं लब्भइ नाणं नाणं लद्धूण भावणा दुक्खं । भाविअमईवि जीवो विसएसु विरज्जई दुक्खं ॥ १६८६ ॥
अन्ने उ पढमगं चिअ चरित्तमोहक्खओवसमहीणा । पव्वइआ ण लहंती पच्छावि चरित्तपरिणामं ॥ १६८७ ॥

मिच्छद्दिट्ठीआवि हु केई इह होंति दव्वलिंगधरा। ता तेसिं कह ण हुंती किलिट्ठचित्ताइआ दोसा ॥ १६८८ ॥
एत्थ य आहारो खलु उवलक्खणमेव होइ णायव्वो। वोसिरइ तओ सव्वं उवउत्तो भावसल्लंपि ॥ १६८९ ॥
अण्णंपिव अप्पाणं संवेगाइसयओ चरमकाले। मण्णइ विसुद्धभावो जो सो आराहओ भणिओ ॥ १६९० ॥
सव्वत्थापडिबद्धो मज्झत्थो जीविए अ मरणे अ। चरणपरिणामजुत्तो जो सो आराहओ भणिओ ॥१६९१॥
सो तप्पभावओ चिअ खविउं तं पुव्वदुक्कडं कम्मं। जायइ विसुद्धजम्मो जोगो अ पुणोऽवि चरणस्स॥ १६९२॥
एसो अ होइ तिविहो उक्कोसो मज्झिमो जहण्णो अ। लेसादारेण फुडं वोच्छामि विसेसमेएसिं ॥ १६९३ ॥
सुक्काए लेसाए उक्कोसगमंसगं परिणमित्ता। जो मरइ सो हु णिअमा उक्कोसाराहओ होइ ॥ १६९४ ॥
जे सेसा सुक्काए अंसा जे आवि पम्हलेसाए। ते पुण जो सो भणिओ मज्झिमओ वीअरागेहिं ॥ १६९५ ॥
तेऊलेसाए जे अंसा अह ते उ जे परिणमित्ता। मरइ तओऽवि हु णेओ जहण्णमाराहओ इत्थ ॥ १६९६ ॥
एसो पुण सम्मत्ताइभंगओ चेव होइ विण्णेओ। ण उ लेसामित्तेणं तं जमभवाणवि सुराणं ॥ १६९७ ॥
आराहगो अ जीवो तत्तो खविऊण दुक्कडं कम्मं। जायइ विसुद्धजम्मा जोगोऽवि पुणोवि चरणस्स ॥१६९८॥
आराहिऊण एवं सत्तट्ठभवाणमारओ चेव। तेलुक्कमत्थअत्थो गच्छइ सिद्धिं णिओगेणं ॥ १६९९ ॥
सव्वण्णुसव्वदरिसी निरुवमसुहसंगओ उ सो तत्थ। जम्माइदोसरहिओ चिट्ठइ भयवं सया कालं ॥ १७०० ॥
पयाणि पंच वत्थू आराहिंता जहागमं सम्मं। तीअद्धाएँ अणंता सिद्धा जीवा धुअकिलेसा ॥ १७०१ ॥

एयाणि पंच वत्थू आराहित्ता जहागमं सम्मं । इण्हिंपि हु संखिज्जा सिज्झंति विवक्खिए काले ॥ १७०२ ॥
एयाणि पंच वत्थू आराहित्ता जहागमं सव्वं । एसद्धाएऽणंता सिज्झिस्संती धुवं जीवा ॥ १७०३ ॥
एयाणि पंच वत्थू एमेव विराहिउं तिकालंमि । एत्थ अणेगे जीवा संसारपवड्ढगा भणिआ ॥ १७०४ ॥
णाऊण एवमेअं एआणाराहणाएँ जइअव्वं । न हु अण्णो पडियारो होइ इहं भवसमुद्दंमि ॥ १७०५ ॥
एत्थवि मूलं णेअं एगंतेणेव भवसत्तेहिं । सद्धाइभावओ खलु आगमपरतंतया णवरं ॥ १७०६ ॥
जम्हा न धम्ममग्गे मोत्तूणं आगमं इह पमाणं । विज्जइ छउमत्थाणं तम्हा एत्थेव जइअव्वं ॥ १७०७ ॥
सुअवज्झायरणरया पमाणयंता तहाविहं लोअं । भुवणगुरुणो वरागा पमाणयं नावगच्छंति ॥ १७०८ ॥
सुत्तेण चोइओ जो अण्णं उद्दिसिअ तं ण पडिवज्जे । सो तत्तवायबज्झो न होइ धम्मंमि अहिगारी ॥ १७०९ ॥
तीअबहुस्सुयणायं तक्किरिआदरिसणा कह पमाणं ? । वोच्छिज्जंती अ इमा सुद्धा इहं दीसई चेव ॥ १७१० ॥
आगमपरतंतेहिं तम्हा णिच्चंपि सिद्धिकंखीहिं । सव्वमणुट्ठाणं खलु कायव्वं अप्पमत्तेहिं ॥ १७११ ॥
एवं करिंतेहि इमं सत्तणुरूवं अणुंपि किरियाए । सद्धाणुमोअणाहिं सेसंपि कयंति दट्ठव्वं ॥ १७१२ ॥
इअ पंचवत्थुगमिणं उद्धरिअं रुद्दसुअसमुद्दाओ । आयाणुसरणत्थं भवविरहं इच्छमाणेणं ॥ १७१३ ॥

लेश्यामिः राराधकता पंचवस्तु फलंच शास्त्रायत्तता

गाहग्गं पुण इत्थं णवरं गणिऊण ठाविअं एयं । सीसाण हिअट्ठाए सत्तरस सयाणि माणेण ॥ १७१४ ॥

---

॥ इति सूरिपुरन्दरश्रीमद्हरिभद्रसूरीश्वरविरचितं पञ्चवस्तुप्रकरणं समासम् ॥

इति श्रेष्ठि देवचन्दलालभाई जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ६९.

इति पञ्चवस्तुप्रकरणं समाप्तम् ॥

इति श्रेष्ठि देवचन्द्लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ६९.

श्रीलब्धिसूरीश्वर-जैनग्रन्थमालायाः पञ्चमो मणिः [५]

श्री सिद्धचक्राय नमोनमः। आत्मकमललब्धिसूरीश्वरेभ्यो नमः।

परमाराध्यश्रीमच्चिरन्तनाचार्यैर्विरचितं श्रीमद्धरिभद्रसूरीश्वरटीकोपेतञ्च

# श्रीपञ्चसूत्रम्।

जैनरत्न व्या० वाच० कविकुलकिरीटाचार्यवर्य श्रीमद्विजयलब्धिसूरीश्वरपट्टालङ्कार-श्रीमद्विजयगंभीरसूरीश्वरोपदिष्टवेरावलाख्यनगरनिवासी शाह मूलचन्द तनुज सोमचन्द प्रदत्तार्थिकसाहाय्येन प्रकाशितम्।

प्रकाशयित्री-श्री लब्धिसूरीश्वर जैन ग्रन्थमाला-छायापुरी।

वीर संवत् २४६५. }
विक्रम संवत् १९९५. }

प्रतयः ५००

{ आत्म संवत ४३.
{ क्राइस्ट सन् १९३९.

# श्री लब्धिसूरीश्वर जैनग्रन्थमाला ।

॥ ॐ ह्रीँ श्री सिद्धचक्राय नमः ॥

श्री आत्म-कमल-लब्धिसूरीश्वरेभ्यो नमः ॥

श्रीचिरन्तनाचार्यविरचितं, सूरिपुरंदरश्रीहरिभद्रसूरीश्वरकृतव्याख्यासमलङ्कृतम्

# ॥ श्रीपञ्चसूत्रम् ॥

प्रणम्य परमात्मानं, महावीरं जिनेश्वरम् । सत्पञ्चसूत्रकव्याख्या, समासेन विधीयते ॥ १ ॥

आह किमिदं पञ्चसूत्रकं नाम ? उच्यते–पापप्रतिघातगुणबीजाधानसूत्रादीनि पञ्चसूत्राण्येव, तद्यथा–पापप्रतिघातगुणबीजाधानसूत्रम् १, साधुधर्मपरिभावनासूत्रम् २, प्रव्रज्याग्रहणविधिसूत्रम् ३, प्रव्रज्यापरिपालनासूत्रम् ४, प्रव्रज्याफलसूत्रम् ५ इति । आह किमर्थमेवमेतेषामुपन्यासः ? इत्यत्रोच्यते–एतदर्थस्यैवमेव तत्त्वतो भावः, इति ख्यापनार्थं नहि प्रायः पापप्रतिघातेन गुणबीजाधानं विना तत्त्वतस्तच्छ्रद्धाभावप्ररोहः, न चासत्यस्मिन् साधुधर्मपरिभावना, न चापरिभावितसाधुधर्मस्य प्रव्रज्याग्रहणविधावधिकारः, न चाप्रतिपन्नस्तां तत्पालनाय यतते, न चापालने एतत्फलमाप्नोतीति प्रवचनसार एष सज्ज्ञानक्रियायोगात् । अन्यथा अनादिमति संसारे यथाकथञ्चिदनेकशः एतत्प्राप्त्यादेः स्यादेतत् सर्वसत्त्वानामेव न चैतदेव, सर्वसत्त्वानां सिद्ध्यभावात् । सिद्धिश्च प्रधानं फलं

## श्री लब्धिसूरीश्वर जैनग्रन्थमाला ।

| | | | |
|---|---|---|---|
| १. श्री जैनव्रतविधिसङ्ग्रहः— | ( द्वितीयावृत्तिः ) | मूल्यम् | ०—८—० |
| २. श्री हीरप्रश्नोत्तराणि— | ( श्री कीर्तिविजयगणिवरसमुच्चितानि ) | ,, | ०-१२-० |
| ३. श्रीपालचरित्रम्— | ( पण्डित सत्यराजगणिविरचितम् ) | ,, | ०—३—० |
| ४. श्री तत्त्वन्यायविभाकरः— | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीतः ) | ,, | ०—८—० |
| ५. श्री पञ्चसूत्रम् हारिभद्रीय-टीकोपेतम्— | ( महर्द्धिक श्रीमच्चिरन्तनाचार्यकृतम् ) | ,, | ... ... |
| ६. श्री हरिश्चन्द्रकथानकम्— | ( श्रीमद्भावदेवसूरिविरचितम् ) | ,, | ... ... |
| ७. श्री वैराग्यरसमञ्जरी— | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीतः ) | ,, | मुद्रणालये |
| ८. श्री आरम्भसिद्धिः— | ( श्री हेमहंसगणिकृतटीकोपेतः ) | ,, | मुद्रणालये |

# निवेदनम् ।

अथ प्रकाश्यतेऽनया संस्थया श्रीपञ्चसूत्राभिधो ग्रन्थः । अस्य ग्रन्थस्य प्रणेतारः सकलागमाचारकलापनिपुणा सर्वतन्त्रस्वतन्त्रप्रतिमा अविच्छिन्नप्रशासनगगनभानवः सुगृहीतनामधेया भव्यजीवोपकृतिकारणतया समस्तं सारं पञ्चभिः सूत्रैर्विशदीकुर्वन्ति स्म । प्रत्येकञ्च सूत्रं ' अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखं, अस्तोभमनवद्यञ्च-सूत्रं-सूत्रविदो विदुरिति ' सूत्र-लक्षणेन परिपूर्णमस्ति । एभिश्च पञ्चभिः सूत्रैरागमानुगतं स्वानुभूतं वस्तु भव्यजनतासमक्षं, लोकोपकारायैव प्रकटीकृतम् । अस्य ग्रन्थस्य प्रणेतॄणां श्रीमतां चिरन्तनाचार्याणां समयनिर्णये संशयो वर्तते । यतस्तेषामभिधानं ' चिरन्तनाचार्य ' इति मूलतो वा टीकया वा नावगम्यते । केवलं ग्रन्थाद्बहिरस्मिन्ग्रन्थे, तथा श्रीकर्मप्रकृतिचूर्णिकाग्रन्थे च चिरन्तनाचार्यकृतमिति दृश्यते। तस्माच्चिरन्तनाचार्येति ग्रन्थकर्तुर्नाम वा प्राचीनाचार्यपर्यायो वेति न निर्णेतुं शक्यते। समयनिर्णयस्तु तदा दूरापास्त एव । परमेतत्ग्रन्थटीकाकर्तृश्रीहरिभद्रसूरिवरेभ्य एते श्रीचिरन्तनाचार्यपादाः प्राचीना इत्यत्र न विवादः ।

सोऽयं सूरिशिरोमणिभिर्भवविरहाङ्कितश्रीमदाचार्यवरेण्यहरिभद्रसूरिभिः सरलटीकया विस्तारितः । ग्रन्थश्चायमपूर्वगुणरत्नावलिगुंफितः प्रणिधानप्रेमिजनवर्गाणामध्ये तृणामुपकारायान्यत्र प्रकाशितोऽपि ज्ञानसेवाप्रचारार्थं श्रीलब्धिसूरीश्वरजैनग्रन्थमालायाः पञ्चममणितया प्रकटीक्रियते। एतस्माच्च यथार्थं मार्गावतारप्रभविष्णवो भवन्तु भव्या इत्याशास्ते प्रत्यूषप्रार्थ्यकरुणाकरनिकरशेखराणां श्रीमल्लब्धिसूरीश्वराणां शिष्यप्रशिष्यः—

ईडर तीर्थे—सं. १९९५ फाल्गुन शुक्ला पञ्चमी ।          पूज्यपादानामनुचरः—मुनिजितेन्द्रविजयः ॥

## श्रीपञ्चसूत्रस्य विषयानुक्रमः ॥



— प्राप्तिस्थानम् —

शा. चन्दुलाल जमनादास = छायापुरी (वडोदरा स्टेट)

मुद्रक : शेठ देवचंद दामजी, आनंद प्रेस—भावनगर

॥ ॐ ह्रीँ श्री सिद्धचक्राय नमः ॥

श्री आत्म-कमल-लब्धिसूरीश्वरेभ्यो नमः ॥

श्रीचिरन्तनाचार्यविरचितं, सूरिपुरंदरश्रीहरिभद्रसूरीश्वरकृतव्याख्यासमलङ्कृतम्

# ॥ श्रीपञ्चसूत्रम् ॥

प्रणम्य परमात्मानं, महावीरं जिनेश्वरम् । सत्पञ्चसूत्रकव्याख्या, समासेन विधीयते ॥ १ ॥

आह किमिदं पञ्चसूत्रकं नाम ? उच्यते-पापप्रतिघातगुणबीजाधानसूत्रादीनि पञ्चसूत्राण्येव, तद्यथा-पापप्रतिघातगुणबीजाधानसूत्रम् १, साधुधर्मपरिभावनासूत्रम् २, प्रव्रज्याग्रहणविधिसूत्रम् ३, प्रव्रज्यापरिपालनासूत्रम् ४, प्रव्रज्याफलसूत्रम् ५ इति । आह किमर्थमेवमेतेषामुपन्यासः ? इत्यत्रोच्यते-एतदर्थस्यैवमेव तत्त्वतो भावः, इति ख्यापनार्थं नहि प्रायः पापप्रतिघातेन गुणबीजाधानं विना तत्त्वतस्तच्छ्रद्धाभानप्ररोहः. न चासत्यस्मिन् साधुधर्मपरिभावना, न चापरिभावितसाधुधर्मस्य प्रव्रज्याग्रहणविधावधिकारः, न चाप्रतिपन्नस्तां तत्पालनाय यतते, न चापालने एतत्फलमाप्नोतीति प्रवचनसार एष सज्ज्ञानक्रियायोगात् । अन्यथा अनादिमति संसारे यथाकथञ्चिदनेकशः एतत्प्राप्त्यादेः स्यादेतत् सर्वसत्त्वानामेव न चैतदेव, सर्वसत्त्वानां सिद्ध्यभावात् । सिद्धिश्च प्रधानं फलं

प्रव्रज्यापरिपालनस्य । आनुषङ्गिकं तु सुदेवत्वादि । यथाकथंचिदनेकश एतत्प्राप्त्यादिवचनप्रामाण्यात्, सर्वसत्त्वानामेव प्रायो ग्रैवेयकेष्वनन्तश उपपातश्रुतेः, न च तेषु साधुक्रियामन्तरेणोपपातः, न च सम्यग्दृष्टेरपार्द्धपुद्गलपरावर्त्ताभ्यधिको भव इति भावनीयमेतत् । तस्मान्निर्बीजस्यैव क्रियामात्रस्य सा प्राप्तिरिति प्रतिपत्तव्यम् । सबीजायां तु तस्यां न दीर्घदौर्गत्यम्, अत एतदर्थस्यैवमेव तत्त्वतो भावः, इति स्थितम् । अयं चातिगम्भीरो न भवाभिनन्दिभिः क्षौद्र्याद्युपघातात्प्रतिपत्तुमपि शक्यते । आस्तां पुनः कर्तुमिति, न सर्वेषामेवैतत्प्राप्त्यादि, अतो यथोक्तदोषाभावः, इत्यलं विस्तरेण । इह चेदमादिसूत्रम्—

**णमो वीअरागाणं सव्वण्णूणं देविंदपूइआणं जहट्ठिअवत्थुवाईणं तेलुक्कगुरूणं अरुहंताणं भगवंताणं ।**

'नमो वीतरागेभ्यः' । तत्र रज्यतेऽनेनेति रागः, रागवेदनीयं कर्म । आत्मनः क्वचिदभिष्वङ्गपरिणामापादनात् । रञ्जनं वा रागः, रागवेदनीयकर्मापादितो भावोऽभिष्वङ्गपरिणाम एव । वीतोऽपेतो रागो येषां ते वीतरागाः, तेभ्यो नमः । एतच्च वीतद्वेषमोहोपलक्षणम् । वीतद्वेषेभ्यो वीतमोहेभ्यः । तत्र द्विष्यतेऽनेनेति द्वेषः, द्वेषवेदनीयं कर्म, आत्मनः क्वचिदप्रीतिपरिणामापादनात् । द्वेषणं द्वेषः, द्वेषवेदनीयकर्मापादितो भावोऽप्रीतिपरिणाम एव । एवं मुह्यतेऽनेनेति मोहः, मोहवेदनीयं कर्म । आत्मनः क्वचिदज्ञानपरिणामापादनात् । मोहनं वा मोहः, मोहवेदनीयकर्मापादितोऽज्ञानपरिणाम एव। एतदुपलक्षणं वीतरागग्रहणम् । तथा चाह—'सर्वज्ञेभ्यः' नह्यवीतरागा एव अवीतद्वेषादयः सर्वज्ञा भवन्ति, सर्वं जानन्तीति सर्वज्ञास्तेभ्यो नमः । आह ये वीतरागास्ते सर्वज्ञा एवेति गतार्थं विशेषणं, न, छद्मस्थवीतरागाणामसर्वज्ञत्वात् । यद्येवं सर्वज्ञेभ्य इत्येतावदेवास्तु, अलं वीतरागग्रहणेन; न, अवीतरा-

गाणामपि सकलशास्त्रविदामुपचारेण सर्वज्ञव्यवहारसिद्धेस्तद्व्यवच्छेदार्थं वीतरागग्रहणमिति । एतद्विशेषणायैवाह—' देवेन्द्रपूजितेभ्यः ' देवेन्द्राः शक्रादयस्तैः पूजिताः समभ्यर्चितास्तेभ्यो नमः । आह, ये वीतरागाः सर्वज्ञाश्च ते देवेन्द्रपूजिता एवेति । नार्थोऽनेन विशेषणेन, न, मुण्डकेवलिप्रभृतीनां केषाञ्चित्तत्पूजितत्वानुपपत्तेः । यद्येवं देवेन्द्रपूजितेभ्य इत्येतदेवास्तु, अलं वीतरागादिग्रहणेन; न, अवीतरागादीनामपि गणधरादीनां देवेन्द्रपूजितत्वसिद्धेस्तद्व्यवच्छेदार्थं वीतरागादिग्रहणमिति । एतद्विशेषणायैवाह—'यथास्थितवस्तुवादिभ्यः ' यथास्थितमभिलाप्यानभिलाप्यत्वादिना प्रकारेण स्थितं वस्तु वदितुं शीलाः, यथास्थितवस्तुवादिनस्तेभ्यो नमः । आह ये वीतरागाः सर्वज्ञाः, देवेन्द्रपूजिताश्च ते यथास्थितवस्तुवादिन एवेति, न किञ्चिदनेन विशेषणेन; न, असदभ्युपगमव्यवच्छेदार्थत्वात् । तथा ह्यस्त्येवंविधोऽसदभ्युपगमः । किल वीतरागादयोऽपि न यथास्थितवस्तुवादिनः, 'वस्तुवाचामगोचरः' इति वचनात् । यद्येवं यथास्थितवस्तुवादिभ्य इत्येतावदेव चारु, नार्थो वीतरागादिग्रहणेन; न, साम्प्रतः पूर्वधरादेरपि यथास्थितवस्तुवादित्वात्तद्व्यवच्छेदार्थं वीतरागादिग्रहणमिति व्यवच्छेदश्चेह सर्वत्र गुणप्रकर्षवान् स्तवार्ह इति, तस्य तत्संपादने तदन्तर्गतगुणानां तत्संपादनमेवेति न्यायख्यापनार्थमिति तु निराकरणार्थमेव । एभिश्चतुर्भिर्विशेषणपदैरपायापगमातिशयादयश्चत्वारो मूलातिशया उक्ता वेदितव्याः । तद्यथा—अपायापगमातिशयः १, ज्ञानातिशयः २, पूजातिशयः ३, वागतिशय ४ श्च यथोद्देशमेव च वेदितव्याः। अनेनैव क्रमेणैतेषां भावात् । तथाहि—वीतरागो १ भूत्वा सर्वज्ञो २ भवति, सर्वज्ञस्य च पूजातिशयसंभवः ३, तदनु धर्मदेशना ४, इति । अनेनैव क्रमेणैतेषां भाव इति । एतदविनाभाविना भाविनश्चान्येऽपि देहसौगन्ध्यादयः प्रभूता वेदितव्याः । ततश्च 'चतुस्त्रिंशदतिशयसमन्वितेभ्यः परमात्मभ्यो नमः ' इत्युक्तं भवति । अत एव सकलविशेषणार्थोपसंहारेणाह—' त्रैलोक्यगुरुभ्यः '

त्रैलोक्यवासिसत्त्वेभ्यो गृणन्ति शास्त्रार्थमिति त्रैलोक्यगुरवः, तद्गुणाधिकत्वात्तन्माननीयत्वाद्वा, तेभ्यो नमः। एतेनैव संनिबन्धनेनान्वर्थनाम्नाऽऽह–'अरुहेभ्यो भगवद्भ्यः' इति न रोहन्ति न भवाङ्कुरोदयमासादयन्ति, कर्मबीजाभावादिति अरुहाः तेभ्यः। किं विशिष्टेभ्यः?। भगः समग्रैश्वर्यादिलक्षणः, स विद्यते येषां ते भगवन्तः, तेभ्यो भगवद्भ्यो नम इति। एवंभूताश्च ते समधिकृतातिशयभाजश्चरमदेहस्था अपि, ततो मुक्तिभावे जन्माङ्कुरोदयाभावात्। अत एवाह–एतदुक्तार्थसूत्रानुवादकृत्—

**जे एवमाइक्खंति–इह खलु १ अणाइजीवे, २ अणाइजीवस्स भवे, ३ अणाइकम्मसंजोगनिव्वत्तिए, ४ दुक्खरूवे, ५ दुक्खफले, ६ दुक्खाणुबंधे।**

एवं चानन्तरेण ग्रन्थेनेष्टदेवतानमस्कारः। अनुवादकरणस्यापि श्रेयोभूतत्वेन तदारम्भे विघ्नविनायकोपशान्तये मङ्गलार्थं उक्तो वेदितव्यः। 'ये' वीतरागादिविशेषणविशिष्टा भगवन्त 'एवं' इति वक्ष्यमाणं 'आचक्षते' अत्यर्थं व्यक्तमभिदधति, कथम्? इत्याह–'इह खल्वनादिजीवः' इह लोके खलुशब्दोऽवधारणार्थः। लोके एवं नालोके, अनादिः सततं समवस्थितो जीव आत्मा सर्वथाऽ'सतः सत्तायोगात्'। अतिप्रसङ्गात्। विशिष्टशक्त्यसिद्धेः। तथा 'अनादिजीवस्य भवः' भवन्त्यस्मिन् कर्मवशवर्त्तिनः प्राणिन इति भवः, संसारः। किंभूतोऽयम्? इत्याह–'अनादिकर्मसंयोगनिर्वर्त्तितः' अनादिश्चासौ कर्मसंयोगश्च, तत्कृत इत्यर्थः। नान्यथा, कर्मसंयोगमुक्तस्येव केवलस्य तदयोगात्। अहेतुकत्वापत्तेः कृतकत्वेऽपि प्रवाहतस्तथाविधकालवत्, अनादित्वाविरोधात्। अयमेव विशिष्यते–'दुःखरूपो दुःखफलो दुःखानुबन्धः' तत्र दुःखरूपः, जन्मजरामरणरोगशोकरूपत्वात् एतेषां च दुःखत्वात्। तथा दुःखफलः, गत्यन्तरेऽपि जन्मादिभावात्। तथा दुःखानुबन्धः, अनेकभववेदनीयकर्मावहत्वात्। कस्तर्ह्यस्य प्रतीकारः? इत्याह—

आद्यसूत्रे जीवभवकर्मसंयोगादीनां अनादित्ववर्णनम्॥

एअस्स णं वुच्छित्ती सुद्धधम्माओ, सुद्धधम्मसंपत्ती पाव-

कम्मविगमाओ, पावकम्मविगमो तहाभव्वत्ताइभावओ ।

उच्छित्तिः 'शुद्धधर्मात्' ज्ञानदर्शनचारित्ररूपात्, औचित्येन
'एतस्य' भवस्य, 'णं' इति वाक्यालंकारे, 'व्यवच्छित्तिः' अभिग्रहभावस्य सातत्येन भावादिति शुद्धधर्मसंप्राप्तिः ।
सातत्यसत्कारविधिसेवितात् । अयं च श्रावकादेरप्यभिग्रहपालनेन ज्ञेयः । पापकर्म मिथ्यात्वमोहनीयादि, तस्य विगमो
कुतः ? इत्याह-शुद्धधर्मो यथोदितः, तस्य सम्यक्प्राप्तिः संप्राप्तिः, भावप्राप्तिरित्यर्थः । अयं पुनः कुतः ? इत्याह-'पापकर्मविगमः' यथो-
विशिष्टो गमः, अपुनर्बन्धकत्वेन पृथग्भाव इति यावत्, तस्मात्पापकर्मविगमात् । तथाभव्यत्वमिति विशिष्टमेतत्,
दितः, 'तथाभव्यत्वादिभावात्' भव्यत्वं नाम 'सिद्धिगमनयोग्यत्व'मनादिपारिणामिको भावः । तथाभव्यत्वस्य
कालादिभेदेनात्मनां बीजसिद्धिभावात् । आदिशब्दात्कालनियतिकर्मपुरुषकारपरिग्रहः, साध्यव्याधिकल्पत्वात् ।

विपाकसाधनान्याह—

तस्स पुण विवागसाहणाणि, १ चउसरणगमणं, २ दुक्कडगरिहा, ३ सुकडाणसेवणं, अओ

कायव्वमिणं होउकामेणं सया सुप्पणिहाणं भुज्जो भुज्जो संकिलेसे तिकालमसंकिलेसे ।

'तस्य पुनः' तथाभव्यत्वस्य 'विपाकसाधनानि' अनुभावकारणानि । कानि तानि ? इत्याह-१ चतुर्णामर्हत्सिद्धसाधुकेवलि-
प्रज्ञप्तधर्माणां शरणगमनं, प्रधानशरणोपगम इत्यर्थः । 'महानयं प्रत्यपायपरिरक्षणोपायः' । तथा २ दुष्कृतेष्विह परभवगतेषु गर्हा अकर्त्त-
व्यबुद्धिसारा परसाक्षिकी । तथानिवेदनाप्रतिपत्तिर्दुष्कृतगर्हा । 'अप्रतिहतेयं कर्मानुबन्धापनयने,' इति कर्त्तव्या । तथा ३ सुकृतस्य

सति विवेके नियतभाविनोऽखण्डभावसिद्धेः परकृतानुमोदनरूपस्यासेवनं, महदेतत्कुशलाशयनिबन्धनमिति परिभावनीयम्। 'कृतकारितानुमतिभेदभिन्ने हि पुण्यपापे'। एभिस्तत्तथास्वाभाव्यात्साध्यव्याधिवत्तथाभव्यत्वं परिपाच्यते, इति। यत एवमतः यस्मादुक्तवदधिकृततत्त्वसिद्धिः, 'अतः' अस्मात्कारणात्कर्त्तव्यं 'इदं' वक्ष्यमाणं, 'भवितुकामेन' मोक्षार्थिना भव्यसत्त्वेन, कथं कर्त्तव्यम्? इत्याह—'सदा' सर्वकालं 'सुप्रणिधानं' शोभनेन प्रणिधानेन, नात्र कालो नियम्यते किं तु सुप्रणिधानमिति। यदा यदा क्रियते, तदा तदा सुप्रणिधानं कर्त्तव्यमित्यर्थः। सुप्रणिधानस्य फलसिद्धौ प्रधानाङ्गत्वात्। उक्तं च—"प्रणिधानकृतं कर्म, मतं तीव्रविपाकवत्। सानुबन्धननियमाच्छुभांशाच्चैतदेव तत्" इत्थं चैतदङ्गीकर्त्तव्यम्? इत्याह—कर्त्तव्यमिदं, 'भूयो भूयः' पुनः पुनः 'संक्लेशे' सति तीव्ररागादिसंवेदनरूपेऽरतावुत्पन्नायामिति यावत्। तथा 'त्रिकालं' त्रिसन्ध्यं कर्त्तव्यमिदम्। असंक्लेशे प्रकृत्या कालगमने सति यत्कर्त्तव्यं तदाह—

**जावज्जीवं मे भगवंतो परमतिलोगनाहा, अणुत्तरपुन्नसंभारा, खीणराग-**
**दोसमोहा, अचिंताचिंतामणी, भवजलहिपोआ, एगंतसरणा, <u>अरहंता सरणं</u>।**

'जावज्जीवं मे भगवंतो अरहंता सरणं' इति योगः। 'यावज्जीवं' यावज्जीवितं 'मे' मम 'भगवन्तः' समग्रैश्वर्यादियुक्ताः अर्हन्तः शरणं' इति योगः। अत्र 'यावज्जीवं' इति कालपरिमाणं, परतो भङ्गभयात्। पुनरवधित्वेन परतोऽप्यधिकृतशरणस्येष्टत्वात्। एत एव विशेष्यन्ते—परमाश्च ते दुर्गतिभयसंरक्षणेन त्रिलोकनाथाश्च, अत्र त्रिलोकवासिनो देवादयः परिगृह्यन्ते। एत एव विशेष्यन्ते—अनुत्तरः सर्वोत्तमहेतूत्कर्षात्पुण्यसंभारः, तीर्थकरनामकर्मलक्षणो येषां ते, तथा। त एव विशेष्यन्ते—क्षीणा रागद्वेषमोहा अभि-

प्रज्ञाऽप्रीत्यज्ञानलक्षणा येषां ते, तथा। त एव विशेष्यन्ते—' अचिन्त्यचिन्तामणयः ' चिन्तातिक्रान्तापवर्गविधायकत्वेन। त एव विशेष्यन्ते—' भवजलधिपोताः ' तदुत्तारकत्वेन। त एव विशेष्यन्ते—एकान्तशरण्याः ' सर्वाश्रितहितत्वेन। क एवंभूताः ? किं वा एते ? इत्याह—' अर्हन्तः शरणम् ' तत्राशोकाद्यष्टमहाप्रातिहार्यलक्षणम्, पूजामर्हन्तीत्यर्हन्तः, ते मम शरणमाश्रय इति।

तहा पहीणजरामरणा, अवेअकम्मकलंका, पणट्ठवाबाहा, केवलनाणदंसणा,

सिद्धिपुर-निवासी, निरुवमसुहसंगया, सव्वहा कयकिच्चा, सिद्धा सरणं।

' तहा पहीणजरामरणा सिद्धा सरणं ' इति योगः। तथा न केवलमर्हन्तः, किं तु सिद्धाः शरणमिति क्रिया। किं विशिष्टास्ते ? इत्याह—' प्रक्षीणजरामरणा ' प्रक्षीणे सदाऽपुनर्भावित्वेन जरामरणे येषां ते तथा, जन्मादिबीजाभावात्। एत एव विशेष्यन्ते—' अपेतकर्मकलङ्काः ' अपेतः कर्मकलङ्को येषां ते तथाविधाः, सर्वथा कर्मरहिता इत्यर्थः। एत एव विशेष्यन्ते—' प्रनष्टव्याबाधाः ' प्रकर्षेण नष्टा क्षीणा व्याबाधा येषां ते तथा, सर्वव्याबाधावर्जिता इति भावः। एत एव विशेष्यन्ते—' केवलज्ञानदर्शनाः ' केवले संपूर्णे ज्ञानदर्शने येषां ते तथाविधाः, सर्वज्ञाः सर्वदर्शिन इत्यर्थः। एत एव विशेष्यन्ते—' सिद्धिपुरनिवासिनः ' सिद्धिपुरे लोकान्ते वस्तुं शीलं येषां ते तथा, मुक्तिनिवासिन इति गर्भः। एत एव विशेष्यन्ते—' निरुपमसुखसङ्गताः ' निरुपमसुखेनाविद्यमानापेक्षेण संगताः, इति समासः। असांयोगिकानन्दयुक्ता इत्यर्थः। एत एव विशेष्यन्ते—' सर्वथा कृतकृत्याः ' सर्वथा सर्वप्रकारैः कृतं कृत्यं यैस्ते तथा, निष्ठितार्था इति भावः। क एवंभूताः ? किं वा एते ? इत्याह—' सिद्धाः शरणं ' सिद्ध्यन्ति स्म सिद्धाः, परमतत्त्वरूपास्ते मम शरणमाश्रय इति।

तहा पसंतगंभीरासया, सावज्जजोगविरया, पंचविहायारजाणगा, परोवयार-निरया, पउमाइनिदंसणा, झाणज्झयणसंगया, विसुज्झमाणभावा, साहू सरणं।

'तहा पसंतगंभीरासया साहू सरणं' इति योगः। तथा न केवलं सिद्धा शरणं, किंतु साधवः शरणमिति क्रिया। किंविशिष्टास्ते? इत्याह—प्रशान्तः क्षान्तियोगात्, गंभीरोऽगाधतया, आशयश्चित्तपरिणामो येषां ते प्रशान्तगंभीराशयाः। एत एव विशेष्यन्ते—विशेष्यन्ते—सहावद्येन सावद्यः, सपापो योगो व्यापारः कृतादिरूपः, तस्माद्विरताः 'सावद्ययोगविरताः'। एत एव विशेष्यन्ते—पञ्चविधमाचारं ज्ञानाचारादिभेदभिन्नं जानते, इति 'पञ्चविधाचारज्ञाः'। एत एव विशेष्यन्ते—परोपकारे एकान्तिकात्यन्तिकरूपे निरताः, 'परोपकारनिरताः'। एत एव विशेष्यन्ते—पद्मादीनि पङ्कोत्पत्तिजलस्थितिभावेऽपि तदस्पर्शनेन, कामभोगापेक्षयैवमेव भावः, इति निदर्शनानि येषां ते, 'पद्मादिनिदर्शनाः'। आदिशब्दाच्छरत्सलिलादिग्रहः। एत एव विशेष्यन्ते—ध्यानाध्ययनाभ्यां एकाग्रचित्तानिरोधस्वाध्यायलक्षणाभ्यां संगताः, 'ध्यानाध्ययनसंगताः'। एत एव विशेष्यन्ते—विशुध्यमानो विहितानुष्ठानेन भावो येषां ते 'विशुध्यमानभावाः'। क एवं भूताः? किं वा एते? इत्याह—तत्र सम्यग्दर्शनादिभिः सिद्धिं साधयन्तीति साधवः, मुनय इत्यर्थः। ते मम शरणमाश्रय इति।

तहा सुरासुरमणुअपूइओ, मोहतिमिरंसुमाली, रागदोसविसपरममंतो, हेऊ सयलकल्लाणाणं, कम्मवणविहावसू, साहगो सिद्धभावस्स, केवलिपण्णत्तो धम्मो जावज्जीवं मे भगवं सरणं। सरणमुवगओ अ एएसिं, गरहामि दुक्कडं।

'तहा सुरासुरमणुअपूइओ केवलिपण्णत्तो धम्मो जावज्जीवं मे भगवं सरणं' इति योगः। तथा न केवलं साधवः शरणं, किंतु केवलिप्रज्ञप्तो धर्म इति संबन्धः। किंविशिष्टः? इत्याह—सुरासुरमनुजैः पूजितः 'सुरासुरमनुजपूजितः'। सुरा ज्योतिष्कवैमानिकाः। असुरा व्यन्तरभवनपतयः। मनुजाः पुरुषविद्याधराः। अयमेव विशेष्यते—मोहस्तिमिरमिव मोहतिमिरं सद्दर्शनावारकत्वेन। तस्यांशुमालीवांशुमाली, तदपनयनादादित्यकल्पः। अयमेव विशेष्यते—रागद्वेषौ विषमिव रागद्वेषविषं, तस्य परममन्त्रः तद्घातित्वेनेति भावः। अयमेव विशिष्यते—'हेतुः' कारणं, प्रवर्त्तकत्वादिना, 'सकलकल्याणानां' सुदेवत्वादीनाम्। अयमेव विशिष्यते—कर्मवनस्य ज्ञानावरणीयादिसमुदयरूपस्य विभावसुरिवाग्निरिव, तद्दाहकत्वेन। अयमेव विशिष्यते—'साधकः' निर्वर्त्तकः, 'सिद्धभावस्य' सिद्धत्वस्य तथा, तत्संपादकत्वेन। कोऽयमेवं? किं वा? इत्याह—'केवलिप्रज्ञप्तः' केवलिप्ररूपितः, 'धर्मः' श्रुतादिरूपः। 'यावज्जीवं' इति पूर्ववत् 'मे' मम 'भगवान्' समग्रैश्वर्यादिगुणयुक्तः 'शरणं' आश्रयः। एतच्चतुःशरणगमनं, एकार्थसाधकत्वेन प्रभूतानामप्यविरुद्धमेव। अत एव परमार्थम्—"चत्तारिसरणं पवज्जामि, अरिहंते सरणं पवज्जामि, सिद्धे सरणं पवज्जामि, साहू सरणं पवज्जामि, केवलिपण्णत्तं धम्मं सरणं पवज्जामि" इति। चतुःशरणगमनानन्तरं दुष्कृतगर्होक्ता। तामाह—शरणमुपगतश्च सन्नेतेषामर्हदादीनां, गर्हे दुष्कृतम्। किं विशिष्टं? इत्याह—

**जण्णं अरहंतेसु वा, सिद्धेसु वा, आयरिएसु वा, उवज्झाएसु वा, साहूसु वा, साहुणीसु वा, अन्नेसु वा धम्मट्ठाणेसु माणणिज्जेसु पूअणिज्जेसु, तहा माईसु वा, पिईसु वा, बंधूसु वा, मित्तेसु वा, उवयारीसु वा, ओहेण वा जीवेसु मग्गट्ठिएसु अमग्गट्ठिएसु, मग्गसाहणेसु अमग्गसाहणेसु, जंकिंचि वितहमा-**

यरिअं अणायरिअव्वं अणिच्छिअव्वं पावं पावाणुबंधि, सुहमं वा बायरं वा, मणेण वा वायाए वा काएण वा, कयं वा काराविअं वा अणुमोइअं वा, रागेण वा दोसेण वा मोहेण वा, इत्थ वा जम्मे जम्मंतरेसु वा, गरहिअमेअं, दुक्कडमेअं, उज्झियव्वमेअं, विआणिअं मए कल्लाणमित्तगुरुभगवंतवयणाओ एवमेअंति रोइअं सद्धाए, अरहंतसिद्धसमक्खं गरहामि अहमिणं, दुक्कडमेअं, उज्झियव्वमेअं, इत्थ मिच्छामि दुक्कडं, मिच्छामि दुक्कडं, मिच्छामि दुक्कडम् ।

'यत्' इति दुष्कृतनिर्देशः 'णं' इति वाक्यालङ्कारे । 'अर्हत्सु वा' अर्हद्विषयं वा । एवं सिद्धेषु वा, आचार्येषु वा, उपाध्यायेषु वा, साधुषु वा, साध्वीषु वा, अन्येषु वा धर्मस्थानेषु, सामान्येन गुणाधिकेषु, माननीयेषु, पूजनीयेषु । तथा मातृषु वा, पितृषु वा, अनेकजन्मापेक्षं बहुवचनम् । बन्धुषु वा, मित्रेषु वा, उपकारिषु वा, ओघेन वा जीवेषु 'मार्गस्थितेषु' सम्यग्दर्शनादियुक्तेषु, 'असार्गस्थितेषु' एतद्विपरीतेषु, 'मार्गसाधनेषु' पुस्तकादिषु, 'अमार्गसाधनेषु' खड्गादिषु 'यत्किञ्चिद्वितथमाचरितं' अविधिपरिभोगादिना । अनाचरितव्यं, क्रियया । अनेष्टव्यं, मनसा । पापं, पापकारणत्वेन । पापानुबन्धि, तथाविपाकभावेन । सूक्ष्मं, बादरं वा, स्वरूपतः । कथमेतदाचरितं ? इत्याह—मनसा वाचा कायेन वा । कृतं चात्मना १ । कारितं चान्यैः २ । अनुमोदितं वा परकृतम् ३ । एतदपि रागेण वा, द्वेषेण वा, मोहेन वा । अत्र वा जन्मनि, जन्मान्तरेषु वा अतीतेषु । 'गर्हितमेतत्' कुत्सास्पदम् । दुष्कृतमेतत्सद्धर्मबाह्यत्वेन । उज्झितव्यमेतत् हेयतया । विज्ञातं मया, कल्याणमित्रगुरुभगवद्वचनात् । भगवद्वचनप्राप्तौ प्राय इयमानुपूर्वीत्येवमुपन्यासः । एवमेतदिति रोचितं श्रद्धया, तथाविधकर्मक्षयोपशमजया । ततः किं ? इत्याह—अर्हत्सिद्धसमक्षं

आवसूत्रे अर्हत्सिद्ध-समक्षं दुष्कृतगर्हा ॥

तानधिकृत्य गर्हेऽहमिदं, कुत्सामीत्यर्थः । कथम् ? इत्याह—दुष्कृतमेतत् । उज्झितव्यमेतत् । ' अत्र ' व्यतिकरे ' मिच्छामि दुक्कडं ' वारत्रयं पाठः । व्याख्या अस्य अर्थविशेषत्वात्प्राकृताक्षरैरेव न्याय्या, निर्युक्तिकारवचनप्रामाण्यात् । आह च निर्युक्तिकारः—'मि'त्ति मिउमद्दवत्ते, 'च्छ'त्ति य दोसाण छायणे होइ । 'मि'त्ति य मेराए ट्ठिओ, 'दु'त्ति दुगंच्छामि अप्पाणं ।। 'क'त्ति कडं मे पावं, 'ड'त्ति य डेवेमि तं उवसमेणं । एसो मिच्छादुक्कडपयक्खरत्थो समासेणं " । अत्रैतत्सुन्दरत्वान्नासम्यगभिमन्यमान आह—

होउ मे एसा सम्मं गरिहा । होउ मे अकरणनिअमो । बहुमयं ममेअंति, इच्छामि अणुसट्ठिं, १ अरहंताणं भगवंताणं, २ गुरूणं कल्लाणमित्ताणंति । होउ मे एएहिं संजोगो । होउ मे एसा सुपत्थणा । होउ मे इत्थ बहुमाणो । होउ मे इओ मुक्खबीअंति ।

भवतु मम ' एषा ' अनन्तरोदिता, ' सम्यग्गर्हा ' भावरूपा । भवतु मे ' अकरणनियमः' ग्रन्थिभेदवत्तदबन्धरूपः, गर्हाविषय इति सामर्थ्यम् । बहुमतं ममैतद्द्वयं, इत्यस्मादिच्छामि ' अनुशास्तिं ' उदितप्रपञ्चबीजभूताम् । केषां ? इत्याह—अर्हतां भगवतां, तथा गुरूणां कल्याणमित्राणामिति । प्रतिपन्नतत्त्वानां गुणाधिकविषयैव प्रवृत्तिर्न्याय्या, इत्येवमुपन्यासः । प्रणिध्यन्तरमाह—भवतु मम ' एभिः ' अर्हदादिभिः ' संयोगः ' उचितो योग इत्यर्थः । भवतु ममैषा ' सुप्रार्थना ' अर्हदादिसंयोगविषया । भवतु ममात्र बहुमानः प्रार्थनायाम् । भवतु मम ' इतः ' प्रार्थनातो ' मोक्षबीजं ' सुवर्णघटसंस्थानीयं प्रवाहतः कुशलानुबन्धि कर्मेत्यर्थः । तथा—

पत्तेसु एएसु अहं सेवारिहे सिआ, आणारिहे सिआ, पडिवत्तिजुत्ते सिआ, निरइआरपारगे सिआ।

प्राप्तेषु ' एतेषु ' अर्हदादिषु अहं सेवार्हः स्याम् । अर्हदादीनामेवाज्ञार्हः स्याम् । एतेषामेव प्रतिपत्तियुक्तः स्याम् । एतेषामेव

निरतिचारं पारगः स्यामेतदाज्ञायाः । एवं सानुषङ्गां दुष्कृतगर्हामभिधाय, सुकृतासेवनमाह—

**संविग्गो जहासत्तीए सेवेमि सुकडं । अणुमोएमि सव्वेसिं अरहंताणं अणुट्ठाणं । सव्वेसिं सिद्धाणं सिद्धभावं । सव्वेसिं आयरिआणं आयारं । सव्वेसिं उवज्झायाणं सुत्तप्पयाणं । सव्वेसिं साहूणं साहुकिरिअं । सव्वेसिं सावगाणं मुक्खसाहणजोगे । सव्वेसिं देवाणं, सव्वेसिं जीवाणं, होउकामाणं कल्लाणासयाणं मग्गसाहणजोगे ।**

संविग्नः सन् यथाशक्ति, किम् ? इत्याह–सेवे सुकृतम् । एतदेवाह–अनुमोदेऽहमिति प्रक्रमः । सर्वेषामर्हतां ' अनुष्ठानं ' धर्मकथादि । एवं सर्वेषां सिद्धानां ' सिद्धभावं ' अव्याबाधादिरूपम् । एवं सर्वेषामाचार्याणां ' आचारं ' ज्ञानाचारादिलक्षणम् । एवं सर्वेषामुपाध्यायानां सूत्रप्रदानं सद्विधिवत् । एवं सर्वेषां साधूनां ' साधुक्रियां ' सत्स्वाध्यायादिरूपाम् । एवं सर्वेषां श्रावकाणां ' मोक्षसाधनयोगान् ' वैयावृत्त्यादीन् । एवं सर्वेषां ' देवानां ' इन्द्रादीनाम्, सर्वेषां जीवानां, सामान्येनैव भवितुकामानामासन्नभव्यानां, ' कल्याणाशयानां ' शुद्धाशयानां एतेषाम् । किं ? इत्याह–' मार्गसाधनयोगान् ' सामान्येन कुशलव्यापारानानुमोदे, इति क्रियानुवृत्तिः । भवन्ति चैतेषामपि मार्गसाधनयोगाः, मिथ्यादृष्टीनामपि गुणस्थानकत्वाभ्युपगमात् । अनभिग्रहे सति प्रणिधिशुद्धिमाह—

**होउ मे एसा अणुमोअणा । सम्मं विहिपुव्विआ, सम्मं सुद्धासया, सम्मं पडिवत्तिरूवा, सम्मं- निरइआरा । परमगुणजुत्तअरहंताइसामत्थओ, अचिंतसत्तिजुत्ता हि ते भगवंतो, वीअरागा सव्वण्णू**

परमकल्लाणा, परमकल्लाणहेऊ सत्ताणं, 'मूढे अम्हि पावे,' अणाइमोहवासिए अणभिन्ने भावओ, हिआहिआणं अभिन्ने सिआ, अहिअनिवित्ते सिआ, हिअपवित्ते सिआ, आराहगे सिआ, उचिअपडिवत्तीए सव्वसत्ताणं सहिअंति । इच्छामि सुक्कडं, इच्छामि सुक्कडं, इच्छामि सुक्कडं ॥

भवतु ममैषाऽनुमोदना, अनन्तरोक्ता । सम्यग्विधिपूर्विका, सूत्रानुसारेण । सम्यक्शुद्धाशया, कर्मविगमेन । सम्यक्प्रतिपत्तिरूपा, क्रियारूपेण । सम्यग्निरतिचारा, सन्निर्वहणेन । कुतो भवतु ? इत्याह—परमगुणयुक्तार्हदादिसामर्थ्यतः । आदिशब्दात्सिद्धादिपरिग्रहः । प्रार्थनायाः सविषयतामाह—अचिन्त्यशक्तियुक्ता हि ते भगवन्तोऽर्हदादयः, वीतरागाः, सर्वज्ञाः, प्राय आचार्यादीनामप्येतद्वीतरागादित्वमस्तीत्येवमभिधानं तद्विशेषापेक्षं त्वाह—परकल्याणा आचार्यादयोऽपि परमकल्याणहेतवः, सत्त्वानां तैस्तैरुपायैः सर्व एवैते, 'मूढश्चास्मि पाप' एतेषां विशिष्टानां प्रतिपत्तिं प्रति । अनादिमोहवासितः संसारानादित्वेन । अनभिज्ञो भावतः परमार्थतः । हिताहितयोरभिज्ञः स्यामहमेतत्सामर्थ्येन । तथाऽहितनिवृत्तः स्यां, तथा हितप्रवृत्तः स्याम् । एवमाराधकः स्यामुचितप्रतिपत्त्या, सर्वसत्त्वानां संबन्धिन्या । किं ? इत्याह—स्वहितमिति । इच्छामि सुकृतं ३, एवं वारत्रयं पाठः । उत्तममेतत्सुकृतासेवनं, विशेषतः पृथग्गतानां वनच्छेत्तृबलदेवमृगोदाहरणात् परिभावनीयम् । सूत्रपाठे फलमाह—

एवमेअं सम्मं पढमाणस्स सुणमाणस्स अणुप्पेहमाणस्स, सिढिलीभवंति परिहायंति खिज्जंति असुहकम्माणुबंधा । निरणुबंधे वाऽसुहकम्मे भग्गसामत्थे सुहपरिणामेणं, कडगबद्धे विअ विसे, अप्पफले

सिआ, सुहावणिज्जे सिआ, अपुणभावे सिआ ॥

एवमेतत्सूत्रं सम्यक्पठतः संवेगसारं, तथा 'शृण्वतः' आकर्णयतः अन्यसमीपात्, तथाऽनुप्रेक्षमाणस्य अर्थानुस्मरणद्वारेण। किं ? इत्याह–श्लथीभवन्ति, मन्दविपाकतया । तथा परिहीयन्ते, पुद्गलापसरणेन । तथा क्षीयन्ते निर्मूलत एवाशयविशेषाभ्यासद्वारेण । के ? इत्याह–अशुभकर्मानुबन्धा भावरूपाः, कर्मविशेषरूपा वा । ततः किं ? इत्याह–निरनुबन्धं वाऽशुभकर्म यच्छेषमास्ते । भग्नसामर्थ्यं विपाकप्रवाहमङ्गीकृत्य शुभपरिणामेनानन्तरोदितसूत्रप्रभवेन । किमिव ? इत्याह—कटकबद्धमिव विषं मन्त्रसामर्थ्येनाल्पफलं स्यात्, अल्पविपाकमित्यर्थः । तथा सुखापनेयं स्यात्, संपूर्णस्वरूपेणैव । तथा अपुनर्भावं स्यात्कर्म, पुनस्तथाऽबन्धकत्वेन। एवमपायपरिहारः फलत्वेनोक्तः । इदानीं सदुपायसिद्धिलक्षणमेतदभिधातुमाह—

तहा आसगलिज्जंति परिपोसिज्जंति निम्मविज्जंति सुहकम्माणुबंधा । साणुबंधं च सुहकम्मं पगिट्ठं पगिट्ठभावज्जिअं नियमफलयं। सुप्पउत्ते विअ महागए सुहफले सिआ, सुहपवत्तगे सिआ, परमसुहसाहगे सिआ। अपडिबंधमेअं असुहभावनिरोहेणं सुहभावबीअंति, सुप्पणिहाणं सम्मं पढिअव्वं, सम्मं सोअव्वं अणुप्पेहिअव्वंति ॥

तथा आसकलीक्रियन्ते, आक्षिप्यन्त इत्यर्थः । तथा परिपोष्यन्ते, भावोपचयेन । तथा निर्माप्यन्ते परिसमाप्तिं नीयन्ते । के ? इत्याह–कुशलकर्मानुबन्धा इति भावः । ततः किम् ? इत्याह–सानुबन्धं च शुभकर्म, आत्यन्तिकानुबन्धापेक्षम् । किंविशिष्टं ?

किम् ? इत्याह—'प्रकृष्टं' प्रधानं, 'प्रकृष्टभावार्जितं' शुभभावार्जितमित्यर्थः । नियमफलदं, प्रकृष्टत्वेनैव । तदेवंभूतं किम् ? इत्याह—सुप्रयुक्त इव महाऽगदः एकान्तकल्याणः शुभफलं स्यादनन्तरोदितं कर्म । तथा शुभप्रवर्त्तकं स्यादनुबन्धेन । एवं परमसुखसाधकं स्यात् पारम्पर्येण, निर्वाणावहमित्यर्थः । यत एवं, अतोऽस्मात्कारणात् ' अप्रतिबन्धमेतत् ' प्रतिबन्धरहितं, अनिदानमित्यर्थः । ' अशुभभावनिरोधेन ' अशुभानुबन्धनिरोधेनेत्यर्थः । शुभभावनाबीजमितिकृत्वैतत्सूत्रं ' सुप्रणिधानं ' शोभनेन प्रणिधानेन सम्यक् प्रशान्तात्मना ' पठितव्यं ' अध्येतव्यम् । श्रोतव्यमन्वाख्यानविधिना । ' अनुप्रेक्षितव्यं ' परिभावनीयमिति । न च, "होउ मे एसा अणुमोअणा सम्मं विहिपुव्विआ" इत्यादिना निदानपदमेतदिति मन्तव्यम् । क्लिष्टकर्मबन्धहेतोर्भवानुबन्धिनः संवेगशून्यस्य महर्द्धिभोगगृद्ध्याद्यध्यवसानस्य निदानत्वात् । अस्य च तल्लक्षणायोगात् । अनीदृशस्य चानिदानत्वात् । आरोग्यप्रार्थनादेरपि निदानत्वप्रसङ्गात् । तथा चागमविरोधः— " आरोग्गबोहिलाभं समाहिवरमुत्तमं दिंतु " इत्यादिवचनश्रवणादित्यलं प्रसङ्गेन । सूत्रपरिसमाप्ताववसानमङ्गलमाह—

नमो नमिअनमिआणं परमगुरुवीअरागाणं । नमो सेसनमुक्काराररिहाणं । जयउ सव्वण्णुसासणं । परमसंबोहीए, सुहिणो भवन्तु जीवा, सुहिणो भवन्तु जीवा, सुहिणो भवन्तु जीवा ॥

इति पावपडिग्घाय–गुणबीजाहाणसुत्तं सम्मत्तं ॥ १ ॥

नमो नतनतेभ्यः, देवर्षिवन्दितेभ्य इत्यर्थः । केभ्यः ? इत्याह–परमगुरुवीतरागेभ्य इति यावत् । नमः शेषनमस्कारार्हेभ्य

आचार्यादिभ्यो गुणाधिकेभ्य इति भावः । जयतु सर्वज्ञशासनं, कुतीर्थापोहेन । परमसंबोधिना वरबोधिलाभरूपेण सुखिनो भवन्तु, मिथ्यात्वदोषनिवृत्त्या ' जीवाः ' प्राणिन इति । अस्य वारत्रयं पाठः, पापप्रतिघातेन अकुशलानुबन्धाश्रवव्यवच्छेदेन गुणबीजाधानं, भावतः प्राणातिपातविरमणमिति तन्न्यासः। तथाऽनुबन्धतो विचित्रविपाकतत्कर्माधानमित्यर्थः । एतत्सूचकं सूत्रं पापप्रतिघात-धर्मगुणबीजाधानसूत्रं समाप्तम् । इति पञ्चसूत्रकव्याख्यायां प्रथमसूत्रव्याख्या समाप्ता ॥ १ ॥

## द्वितीयं साधुधर्मपरिभावनासूत्रम् ॥

अधुना द्वितीयसूत्रव्याख्या प्रस्तूयते-अस्य चायमभिसंबन्धः-इह धर्मगुणबीजमाहितं सत्तत्तद्वैचित्र्यात्तत्तत्कालादिनिमित्तभेदेन विपच्यते, एतदाभिमुख्येन । तत एव धर्मगुणप्रतिपत्तिश्रद्धोपजायते, तस्यां समुपजातायां यत्कर्त्तव्यं तदभिधातुमाह-

**जायाए धम्मगुणपडिवत्तिसद्धाए, भाविज्जा एएसिं सरूवं पयइसुंदरत्तं अणुगामित्तं परोवयारित्तं परमत्थहेउत्तं । तहा दुरणुचरत्तं, भंगे दारुणत्तं, महामोहजणगत्तं, भूओ दुल्लहत्तंति । एवं जहासत्तीए उचिअविहाणेणं अच्चंतभावसारं पडिवज्जिज्जा । तंजहा-थूलग-पाणाइवायविरमणं १, थूलग-मुसावायविरमणं २, थूलग-अदत्तादाणविरमणं ३, थूलग-मेहुणविरमणं ४, थूलग-परिग्गहविरमण ५ मिचाइ ॥**

जातायां धर्मगुणप्रतिपत्तिश्रद्धायां भावतस्तथाविधकर्मक्षयोपशमेन भावयेत्, एतेषां स्वरूपं धर्मगुणानाम् । प्रकृतिसुन्दरत्वं

जीवसंक्लेशविशुद्ध्या । आनुगामुकत्वं भवान्तरवासनानुगमेन । परोपकारित्वं तथापीडादिनिवृत्त्या । परमार्थहेतुत्वं परम्परया मोक्षसाधनत्वेन । तथा दुरनुचरत्वं मन्दैर्चानभ्यासात् । भङ्गे दारुणत्वं भगवदाज्ञाखण्डनतः । महामोहजनकत्वं धर्मदूषकत्वेन । भूयो दुर्लभत्वं विपक्षानुबन्धपुष्ट्येति भावः, इति। एवमुक्तेन प्रकारेण यथाशक्ति शक्त्यनुरूपं, न तद्धान्याधिक्याभ्याम् । उचितविधानमेव शास्त्रोक्तेन विधिना । अत्यन्तभावसारं महता प्रणिधानबलेन । प्रतिपद्येत धर्मगुणान्न राभसिक्रया प्रवृत्त्या, अस्या विपाकदारुणत्वात् । किंभूतांस्तान् ? इत्याह—तद्यथा–स्थूलप्राणातिपातविरमणं, स्थूलमृषावादविरमणं, स्थूलादत्तादानविरमणं, स्थूलमैथुनविरमणं, स्थूलपरिग्रहविरमणमित्यादि । 'आदि' शब्दाद्दिग्व्रताद्युत्तरगुणपरिग्रहः । आदावुपन्यासश्चैषाम् 'भावत इत्थमेव प्राप्तेरिति ।' उक्तञ्च—" सम्मत्तंमि उ लद्धे पलियपुहत्तेण सावओ होज्जा । चरणोवसमखयाणं सागरसंखं होत्ति ॥ एवं अप्परिवडिए, सम्मत्ते देवमणुयजम्मेसु । अण्णयरसेढिवज्जं, एगभवेणं च सव्वाइं " इत्यादि ॥

**पडिवज्जिऊण पालणे जइज्जा, सयाणागाहगे सिआ, सयाणाभावगे सिआ, सयाणापरतंते सिआ, "आणा" हि मोहविसपरममंतो, जलं रोसाइजलणस्स, कम्मवाहितिगिच्छासत्थं, कप्पपायवो सिवफलस्स ॥**

प्रतिपद्य पालने यतेत, अधिकृतगुणानाम् । कथम् ? इत्याह—सदाज्ञाग्राहकः स्यात्, अध्ययनश्रवणाभ्याम् । 'आज्ञा' आगम उच्यते । सदाज्ञाभावकः स्यात्, अनुप्रेक्षाद्वारेण । सदाज्ञापरतन्त्रः स्यादनुष्ठानं प्रति । किमेवं ? इत्याह—आज्ञा हि मोहविषपरममन्त्रः, तदपनयनेन । जलं द्वेषादिज्वलनस्य, तद्विध्यापनेन । कर्मव्याधिचिकित्साशास्त्रं, तत्क्षयकारणत्वेन । कल्पपादपः शिवफलस्य, तदवन्ध्यसाधकत्वेन ॥

वज्जिज्जा अधम्ममित्तजोगं, चिंतिज्जाभिणवपाविए गुणे, अणाइभवसंगए अ अगुणे, उदग्गसहकारित्तं अधम्ममित्ताणं, उभयलोगगरहिअत्तं असुहजोगपरंपरं च ॥

तथा वर्जयेत् 'अधर्ममित्रयोगं' अकल्याणमित्रसम्बन्धम् । चिन्तयेत् अभिनवप्राप्तान् 'गुणान्' स्थूलप्राणातिपातविरमणादीन् । अनादिभवसङ्गतांश्चाऽगुणान्, सदैवाविरतत्वेन । उदग्रसहकारित्वं, तत्पापानुमत्यादिना । अशुभयोगपरंपरं च, अकुशलानुबन्धतः॥

परिहरिज्जा सम्मं लोगविरुद्धे, करुणापरे जणाणं, न खिंसाविज्ज धम्मं, संकिलेसो खु एसा, परमबोहिबीअमबोहिफलमप्पणोत्ति । एवमालोएज्जा--न खलु इत्तो परो अणत्थो, अंधत्तमेअं संसाराडवीए, जणगमणिट्ठावायाणं, अइदारुणं सरूवेणं, असुहाणुबंधमच्चत्थं ॥

तथा परिहरेत् सम्यग् लोकविरुद्धानि तदशुभाध्यवसायादिनिबन्धनानि । अनुकम्पापरो जनानां, माभूत्तेषामधर्मः । न खिंसयेद्धर्मं, न गर्हयेज्जनैरित्यर्थः । संक्लेश एवैषा खिंसाऽशुभभावत्वेन । परं अबोधिबीजं, तत्प्रद्वेषेण । अबोधिफलमात्मन इति । जनानां तन्निमित्तभावेन । तथा एवमालोचयेत्सूत्रानुसारेण । न खल्वतः परोऽनर्थोऽबोधिफलात् । तत्कारणभावाद्वा लोकविरुद्धत्वादिति । अन्धत्वमेतत्संसाराटव्यां हितदर्शनाभावेन । जनकमनिष्ट (ष्टा)पातानां, नरकाद्युपपातकारणतया । अतिदारुणं स्वरूपेण, संक्लेशप्रधानत्वात् । अशुभानुबन्धमत्यर्थं परम्परोपघातभावेनेति । अत एवोक्तम्–" लोकः खल्वाधारः सर्वेषां धर्मचारिणां यस्मात् । तस्माल्लोकविरुद्धं धर्मविरुद्धं च संत्याज्यम् ॥ " इत्यादि ॥

सेविज्ज धम्ममित्ते विहाणेणं, अंधो विवाणूकट्टए, वाहिए विव विज्जे, दरिद्दो विव ईसरे, भीओ विव महानायगे, न इओ सुंदरतरमन्नंति, बहुमाणजुत्ते सिआ, आणाकंखी, आणापडिच्छगे, आणा अविराहगे, आणानिप्फायगेत्ति ॥

तथा सेवेत धर्ममित्राणि ' विधानेन ' सत्प्रतिपत्त्यादिना । अन्ध इवानुकर्षकान्, पातादिभयेन । व्याधिवान् इव वैद्यान्, दुःखभयेन । दरिद्र इवेश्वरान्, स्थितिहेतुत्वेन । भीत इव महानायकान्, आश्रयणीयत्वेन । तथा न इतो—धर्ममित्रसेवनात् । सुन्दरतरमन्यदितिकृत्वा बहुमानयुक्तः स्यात् धर्ममित्रेषु । आज्ञाकाङ्क्षी अदत्तायामस्यां तेषाम् । आज्ञाप्रतीच्छकः प्रदानकाले तेषामेव । आज्ञाऽविराधकः प्रस्तुतायां तेषामेव । आज्ञानिष्पादक इत्यौचित्येन तेषामेव ।

पडिवन्नधम्मगुणारिहं च वट्टिज्जा, गिहिसमुचिएसु गिहिसमायारेसु, परिसुद्धाणुट्ठाणे, परिसुद्धमणकिरिए, परिसुद्धवइकिरिए, परिसुद्धकायकिरिए ॥

प्रतिपन्नधर्मगुणार्हं च वर्त्तेत, सामान्येनैव । ' गृहिसमुचितेषु गृहिसमाचारेषु ' नानाप्रकारेषु, परिशुद्धानुष्ठानः सामान्येनैव । परिशुद्धमनःक्रियः शास्त्रानुसारेण । परिशुद्धवाक्क्रियोऽनेनैव । परिशुद्धकायक्रियोऽनेनैव । एतद्विशेषेणाभिधातुमाह—

वज्जिज्जाऽणेगोवघायकारगं, गरहणिज्जं, बहुकिलेसं, आयइविराहगं, समारंभं । न चिंतिज्जा परपीडं । न भाविज्जा दीणयं । न गच्छिअज्जा हरिसं । न सेविज्जा वितहाभिनिवेसं । उचिअमणपवत्तगे सिआ । न

भासिज्जा अलिअं, न फरुसं, न पेसुन्नं, नाणिबद्धं। हिअमिअभासगे सिआ। एवं न हिंसिज्जा भूआणि। न गिण्हिज्ज अदत्तं। न निरिक्खिज्ज परदारं। न कुज्जा अणत्थदंडं। सुहकायजोगे सिआ।

वर्जयेदनेकोपघातकारकं सामान्येन, गर्हणीयं प्रकृत्या, बहुक्लेशं प्रवृत्तौ, 'आयतिविराधकं' परलोकपीडाकरं, 'समारम्भं' अङ्गारकर्मादिरूपम्। तथा न चिन्तयेत्परपीडां (पीडनार्थं) सामान्येन। न भावयेद्दीनतां कस्यचिदसंप्रयोगे। न गच्छेद्धर्षं कस्यचित्संप्रयोगे। न सेवेत 'वितथाभिनिवेशं' अतत्त्वाध्यवसायं, किं तु उचितमनःप्रवर्त्तकः स्याद् वचनानुसारेण। एवं न भाषेतानृतमभ्याख्यानादि न 'परुषं' निष्ठुरं, न 'पैशून्यं' परप्रीतिहारि, 'नाऽनिबद्धं' विकथादि, किं तु हितमितभाषकः स्यात्सूत्रनीत्या। एवं न हिंस्याद् 'भूतानि' पृथिव्यादीनि।' न गृह्णीयाददत्तं स्तोकमपि। न निरीक्षेत परदारं रागतः। न कुर्यादनर्थदण्डं अपध्यानाचरितादि, किं तु शुभकाययोगः स्यात्, आगमनीत्या॥

तदा लाहोचिअदाणे, लाहोचिअभोगे, लाहोचिअपरिवारे, लाहोचिअनिहिकरे सिआ। असंतावगे परिवारस्स, गुणकरे जहासत्तिं, अणुकंपापरे निम्ममे भावेणं। एवं खु तप्पालणेवि धम्मो, जह अन्नपालणेत्ति। सव्वे जीवा पुढो पुढो, ममत्तं बंधकारणं॥

तथा लाभोचितदानः अष्टभागाद्यपेक्षया। तथा लाभोचितभोगः अष्टभागाद्यपेक्षया। लाभोचितपरिवारः चतुर्भागादिभर्त्तव्यपरिमाणेण। लाभोचितनिधिकारः स्यात्, चतुर्भागाद्यपेक्षयैव। उक्तश्चात्र लौकिकैः—" पादमायान्निधिं कुर्यात्पादं वित्ताय वर्द्धयेत्।

धर्मोपभोगयोः पादं, पादं भर्त्तव्यपोषणे " ॥ तथाऽन्यैरप्युक्तम्—" आयादर्द्धं नियुञ्जीत, धर्मे यद्वाऽधिकं सतः । शेषेण शेषं कुर्वीत, यत्नतस्तुच्छमैहिकम् " ॥ इत्यादि । तथा असन्तापकः परिजनस्य स्यादिति वर्त्तते शुभप्रणिधानेन । गुणकरो यथाशक्ति भवस्थिति-कथनशीलत्वेन । अनुकम्पापरः प्रतिफलनिरपेक्षतया । निर्ममो भावेन भवस्थित्यालोचनात् । क एवं गुणः स्यात् ? इत्याह—एवं यस्मात्तत्पालनेऽपि धर्मः, जीवोपकारभावात् । यथाऽन्यपालन इति जीवविशेषेण । किमित्येतदेव ? न, इत्याह—सर्वे जीवाः पृथक् पृथग् वर्त्तन्ते, स्वलक्षणभेदेन, किं तु ममत्वं बन्धकारणं, लोभरूपत्वात् । उक्तञ्च—संसाराम्बुनिधौ सत्त्वाः कर्मोर्मिपरिघट्टिताः । संयुज्यन्ते वियुज्यन्ते, तत्र कः कस्य बान्धवः " ॥ तथा—" अत्यायतेऽस्मिन् संसारे, भूयो जन्मनि जन्मनि । सत्त्वो नैवास्त्यसौ कश्चिद्यो न बन्धुरनेकधा " ॥ इत्यादि, सर्वथा ? परिभावनामात्रमेतत्स्वजनो न स्वजन इति ॥

**तहा तेसु तेसु समायारेसु सइ समण्णागए सिआ, अमुगेहं अमुगकुले अमुगसिस्से अमुगधम्मट्ठाणट्ठिए। न मे तव्विराहणा, न मे तदारंभो, वुड्ढी ममेअस्स, एअमित्थ सारं, एअमायभूअं, एअं हिअं, असारमण्णं सव्वं, विसेसओ अविहिगहणेणं। एवमाह तिलोगबंधू परमकारुणिगे सम्मं संबुद्धे भगवं अरहंतेत्ति। एवं समालोचिअ, तदविरुद्धेसु समायारेसु सम्मं वट्टिज्जा, भावमंगलमेअं तन्निप्फत्तीए ॥**

तथा तेषु तेषु समाचारेषु गृहिसमुचितेष्विति वर्तते, स्मृतिसमन्वागतः स्यात् आभोगयुक्तः । कथं ? इत्याह—अमुकोऽहं देव-दत्तादिनामा । अमुककुले इक्ष्वाक्वाद्यपेक्षया । अमुकशिष्यो धर्मतः, तत्तदाचार्यापेक्षया । अमुकधर्मस्थानस्थितः अणुव्रताद्यपेक्षया ।

न मम तद्विराधना सांप्रतम् । न मम तदारम्भः, विराधनारम्भः । तथा वृद्धिर्ममैतस्य धर्मस्थानस्य । एतदत्र सारं धर्मस्थानम् । एतदात्मभूतमानुगामुकत्वेन । एतद्धितं सुन्दरपरिणामत्वेन । असारमन्यत्सर्वमर्थजातादीति । विशेषतोऽविधिग्रहणेन विपाकदारुणत्वात् । यथोक्तम्–" पापेनैवार्थरागान्धः, फलमाप्नोति यत्क्वचित् । बडिशामिषवत्तत्तु, विना नाशं न जीर्यति " इति । एतदेवमेवेत्याह–एवमाह त्रिलोकबन्धुः, समुपचितपुण्यसंभारः परमकारुणिकः तथाभव्यत्वनियोगात् । सम्यक् संबुद्धोऽनुत्तरबोधिबीजतः । भगवानर्हन् सत्त्वविशेष इति । एवं समालोच्य ' तदविरुद्धेषु ' अधिकृतधर्मस्थानाविरुद्धेषु समाचारेषु विचित्रेषु सम्यग् वर्तेत। सूत्रनीत्या भावमङ्गलमेतद्विधिना वर्त्तनं, तन्निष्पत्तेरधिकृतसमाचारनिष्पत्तेरिति ॥

**तहा जागरिज्ज धम्मजागरिआए, को मम कालो? किमेअस्स उचिअं? असारा विसया, निअमगामिणो, विरसावसाणा। भीसणो मच्चू, सव्वाभावकारी, अविन्नायागमणो, अणिवारणिज्जो पुणो पुणोऽणुबंधी। धम्मो एअस्स ओसहं, एगंतविसुद्धो, महापुरिससेविओ, सव्वहिअकारी निरइआरो परमाणंदहेऊ ॥**

तथा जागृयात् भावनिद्राविरहेण । धर्मजागरया तत्त्वालोचनरूपया । को मम कालः ? वयोऽवस्थारूपः । किमेतस्योचितं ? धर्माद्यनुष्ठानम् । ' असारा विषयाः ' तुच्छाः शब्दादयो, ' नियमगामिनो ' वियोगान्ताः, ' विरसावसानाः ' परिणामदारुणाः । तथा भयानको मृत्युः, महाभयजननः । सर्वाभावकारी तत्साध्यार्थक्रियाऽभावात् । अविज्ञातागमनः, अदृश्यस्वभावत्वान्मृत्योः । अनिवारणीयः, स्वजनादिबलेन । पुनः पुनरनुबन्धी, अनेकयोनिभावेन । 'धर्म एतस्यौषधं, मृत्योर्व्याधिकल्पस्य । किंविशिष्टः ?

इत्याह—' एकान्तविशुद्धः ' निवृत्तिरूपः, ' महापुरुषसेवितः ' तीर्थकरादिसेवितः, सर्वहितकारी मैत्र्यादिरूपतया । निरतिचारो यथागृहीतपरिपालनेन । परमानन्दहेतुः, निर्वाणकारणमित्यर्थः ॥

नमो इमस्स धम्मस्स। नमो एअधम्मपगासगाणं । नमो एअधम्मपालगाणं । नमो एअधम्मपरूवगाणं । नमो एअधम्मपवज्जगाणं। इच्छामि अहमिणं धम्मं पडिवज्जित्तए, सम्मं मणवयणकायजोगेहिं । होउ ममेअं कल्लाणं, परमकल्लाणाणं जिणाणमणुभावओ । सुप्पणिहाणमेवं चिंतिज्जा पुणो पुणो, एअधम्मजुत्ताण-मववायकारी सिआ । पहाणं मोहच्छेअणमेअं । एवं विसुज्झमाणे भावणाए, कम्मापगमेणं उवेइ एअस्स जुग्गयं । तहा संसारविरत्ते संविग्गो भवइ, अममे अपरोवतावी, विसुद्धे विसुज्झमाणभावे ॥

॥ इति साहुधम्मपरिभावणासुत्तं सम्मत्तं ॥ २ ॥

नम एतस्मै धर्माय, अनन्तरोदितरूपाय । नम एतद्धर्मप्रकाशकेभ्योऽर्हद्भ्यः । नम एतद्धर्मपालकेभ्यो यतिभ्यः। नम एतद्धर्मप्र-तिपत्तृभ्यः श्रावकादिभ्यः । इच्छाम्यहमेनं धर्मं प्रतिपत्तुम् । अनेनैतत्पक्षपातमाह—सम्यग्मनोवाक्काययोगैः । अनेन तु संपूर्णप्रतिपत्ति-रूपं प्रणिधिविशेषमाह-भवतु ममैतत्कल्याणं; अधिकृतधर्मप्रतिपत्तिरूपं, परमकल्याणानां जिनानामनुभावतः, तदनुग्रहेणेत्यर्थः । सुप्रणिधानमेवं चिन्तयेत् पुनः पुनः । एवं हि स्वाशयादेव तन्निमित्तोऽनुग्रह इति । तथा एतद्धर्मयुक्तानां यतीनामवपातकारी स्याम् आज्ञाकारीति भावः । प्रधानं मोहच्छेदनमेतत् । तदाज्ञाकारित्वं तन्मोहच्छेदनयोगनिष्पत्त्यङ्गतयेति हृदयम् । एवं कुशलाभ्यासे

विशुद्ध्यमानो विशुद्ध्यमान एतत्सेवक इति प्रक्रमः । भावनयोक्तरूपया कर्मापगमेन हेतुना, उपैति एतस्य धर्मस्य योग्यताम्, एतदेवाह—तथा संसारविरक्तस्तद्दोषभावनया, संविग्नो भवति मोक्षार्थी, 'अममः' ममत्वरहितः, 'अपरोपतापी' परपीडापरिहारी, 'विशुद्धः' ग्रन्थ्यादिभेदेन, विशुद्ध्यमानभावः शुभकण्डकवृद्ध्या । इति साधुधर्मपरिभावनासूत्रं समाप्तम् । भावतः साधुधर्मप्राप्त्युपायभूतार्थसूचकं सूत्रं समाप्तम् ॥ इति पञ्चसूत्रकव्याख्यायां द्वितीयसूत्रव्याख्या समाप्ता ॥

## तृतीयं प्रव्रज्याग्रहणविधिसूत्रम् ॥

अधुना तृतीयसूत्रव्याख्या प्रक्रम्यते—अस्य चायमभिसंबन्धः । अनन्तरसूत्रे जातायां धर्मगुणप्रतिपत्तिश्रद्धायां यत्कर्त्तव्यं तदुक्तम्, तच्च कुर्वता साधुधर्मः परिभावितो भवति, तस्मिन् परिभाविते यत्कर्त्तव्यं तदभिधातुमाह—

परिभाविए साहुधम्मे जहोदिअगुणे, जइज्जा सम्ममेअं पडिवज्जित्तए । अपरोवतावं, परोवतावो हि तप्पडिवत्तिविग्धं, अणुपाओ खु एसो, न खलु अकुसलारंभओ हिअं । अप्पडिवुद्धे कहिंचि पडिबोहिज्जा अम्मापिअरे । उभयलोगसफलं जीविअं, समुदायकडा कम्मा समुदायफलत्ति । एवं सुदीहो अ विओगो । अण्णहा एगरुक्खनिवासिसउणतुल्लमेअं । उद्दामो मच्चू पच्चासण्णो अ । दुल्लहं मणुअत्तं समुद्दपडिअरयणलाभतुल्लं । अइप्पभूआ अण्णे भवा दुक्खबहुला मोहंधयारा अकुसलाणुबंधिणो अजुग्गा सुद्धधम्मस्स ।

जुग्गं च एअं पोअभूअं भवसमुद्दे, जुत्तं सकज्जे निउंजिउं, संवरट्ठइअछिद्दं, नाणकण्णधारं तवपवणजवणं। 'खणे दुल्लहे' सव्वकज्जोवमाईए सिद्धिसाहगधम्मसाहगत्तेण। उवादेआ य एसा जीवाणं; जं न इमीए जम्मो, न जरा, न मरणं, न इट्ठविओगो, नाणिट्ठसंपओगो, न खुहा, न पिवासा, न अण्णो कोइ दोसो, सव्वहा अपरतंतं जीवावत्थाणं असुभरागाइरहिअं संतं 'सिवं' अव्वाबाहंति॥

परिभाविते साधुधर्मे अनन्तरसूत्रोदितेन विधिना, यथोदितगुणः संसारविरक्तः संविग्नः अममः अपरोपतापी विशुद्धः विशुद्ध्यमानभावः सन्, यतेत सम्यग्विधिनाऽमुं धर्मं प्रतिपत्तुम्। कथं? इत्याह—अपरोपतापमिति क्रियाविशेषणम्। किमेतदाश्रीयते? इत्याह—परोपतापो हि, तत्प्रतिपत्तिविघ्नः परोपतापो यस्माद्धर्मप्रतिपत्त्यन्तरायः। एतदेवाह—अनुपाय एवैष धर्मप्रतिपत्तौ परोपतापः। कथं? इत्याह—न खल्वकुशलारम्भतो हितम्। अकुशलारम्भश्च धर्मप्रतिपत्तावपि परोपतापः। न चान्यस्तत्र, प्रायोऽयं संभवतीति। संभविपरिहारार्थमाह—अप्रतिबुद्धौ कथञ्चित्कर्मवैचित्र्यतः, प्रतिबोधयेन्मातापितरौ। न तु प्रायो महासत्त्वस्यैतावप्रतिबुद्धौ भवत इति। कथञ्चित्? इत्याह—उभयलोकसफलं जीवितं प्रशस्यत इति शेषः। तथा समुदायकृतानि कर्माणि, प्रक्रमाच्छुभानि समुदायफलानीति। अनेन भूयोऽपि योगाक्षेपः। तथा चाह—एवं सुदीर्घो वियोगः भवपरम्परया सर्वेषामस्माकमिति प्रक्रमः। अन्यथैवमकरणे एकवृक्षनिवासिशकुनतुल्यमेतच्चेष्टितमिति शेषः। यथोक्तम्—"वासवृक्षं समागम्य, विगच्छन्ति यथाऽण्डजाः नियतं विप्रयोगान्तस्तथा भूतसमागमः॥" इत्यादि। एतदेव स्पष्टयन्नाह—उद्दामो मृत्युः अनिवारितप्रसरः प्रत्यासन्नश्चाल्पायुष्ट्वेन। तथा

दुर्लभं मनुजत्वं, भवाब्धाविति शेषः। अत एवाह–समुद्रपतितरत्नलाभतुल्यं, अतिदुरापमित्यर्थः। कुतः? इत्याह–अतिप्रभूता अन्ये भवाः पृथिवीकायादिसंबन्धिनः कायस्थित्या। यथोक्तम्–"असंखोसप्पिणि–सप्पिणीओ एगिन्दियाण उ चउण्हं। ता चेव उ अणंता, वणस्सतीए उ बोधव्वा" ॥ १ ॥ एते च दुःखबहुला उत्कटासातवेदनीया मोहान्धकारास्तदुदयतीव्रतया, अकुशलानुबन्धिनः प्रकृत्याऽसच्चेष्टाहेतुत्वेन॥ यत एवमतः–अयोग्याः शुद्धधर्मस्य चारित्रलक्षणस्य, योग्यं चैतन्मनुजत्वम्। किंविशिष्टम्? इत्याह–पोतभूतं भवसमुद्रे, तदुत्तारकत्वेन। यत एवमतो युक्तं स्वकार्ये नियोक्तुं धर्मलक्षणे। कथं? इत्याह–संवरस्थगितच्छिद्रं, छिद्राणि प्राणातिपाताऽविरमणादीनि। तथा ज्ञानकर्णधारमभीक्ष्णं तदुपयोगतः। तपःपवनजवनं, अनशनाद्यासेवनतया। एवं युक्तं स्वकार्ये नियोक्तुम्। किं? इत्यत आह–क्षण एष दुर्लभः। क्षणः प्रस्तावः सर्वकार्योपमातीत एषः। कथं? इत्याह–सिद्धिसाधकधर्मसाधकत्वेन हेतुना, उपादेया चैषा जीवानां सिद्धिरेव। यत्रास्यां सिद्धौ जन्म प्रादुर्भावलक्षणम्। न मरणं, प्राणत्यागलक्षणम्। नेष्टवियोगः, तदभावात्। नानिष्टसंप्रयोगोऽत एव हेतोः। न क्षुद्, बुभुक्षारूपा। न पिपासा, उदकेच्छारूपा। न चान्यः कश्चिद्दोषः, शीतोष्णादिः। सर्वथाऽपरतन्त्रं जीवावस्थानं, अस्यां सिद्धाविति प्रक्रमः। अशुभरागादिरहितमेतदवस्थानम्। एतदेव विशेष्यते–शान्तं शिवमव्याबाधमिति। शान्तं शक्तितोऽपि क्रोधाद्यभावेन। शिवं सकलाऽशिवाऽभावतः। अव्याबाधं, निष्क्रियत्वेनेति ॥

विवरीओ अ संसारो इमीए अणवट्ठिअसहावो। "इत्थ खलु सुहीवि असुही, संतमसंतं, सुविणुव्व

सव्वमालमालंति । ता अलमित्थ पडिबंधेणं । करेह मे अणुग्गहं" । उज्जमह एअं वुच्छिदित्तए । अहंपि तुम्हाणुमईए साहेमि एअं । निव्विण्णो जम्ममरणेहिं । समिज्झइ अ मे समीहिअं गुरुप्पभावेणं । एवं सेसेवि बोहिज्जा । तओ सममेएहिं सेविज्ज धम्मं । करिज्जोचिअकरणिज्जं, निरासंसो उ सव्वदा, एअं परममुणिसासणं ॥

विपरीतश्च संसारोऽस्याः सिद्धेर्जन्मादिरूपत्वात् सर्वोपद्रवालयो। यथाह—"जरामरणदौर्गत्यव्याधयस्तावदासताम्, मन्ये जन्मापि धीरस्य, भूयो भूयस्त्रपाकरम्" ॥१॥ अत एवाह—अनवस्थितस्वभावः संसारः। "अत्र खलु सुख्यप्यसुखी पर्यायतः, सदप्यसत्पर्यायत एव। स्वप्न इव, सर्वमालमालमास्थाऽभावेनेति । यत एवं तदलमत्र प्रतिबंधेन संसारे, कुरुत ममानुग्रहम्" । कथं ? इत्याह—उद्यच्छतेनं व्यवच्छेत्तुं संसारं यूयम्। अहमपि युष्माकमनुमत्या साधयाम्येतद्व्यवच्छेदनम्। किमिति ? अत आह—निर्विण्णो जन्ममरणाभ्यां संसारागामिभ्याम् । समृद्ध्यति च मम समीहितं संसारव्यवच्छेदनं, गुरुप्रभावेन । एवं शेषाण्यपि भार्यादीनि बोधयेदौचित्योपन्यासेन । ततः सममेभिर्मातापित्रादिभिः सेवेत धर्मं चारित्रलक्षणम् । कथं ? इत्याह—निराशंस एव सर्वदा, इहलोकपरलोकाभ्याम्। एतत्परममुनिशासनं वीतरागवचनमित्यर्थः ॥

अबुज्झमाणेसु अ, कम्मपरिणईए विहिज्जा, जहासत्तिं तदुवकरणं आओवायसुद्धं समईए । कयण्णुआ खु एसा । करुणा य, धम्मप्पहाणजणणी जणम्मि । तओ अणुण्णाए पडिवज्जिज्ज धम्मं ।

